मसूजीषोः षुक् ॥ १०८ ॥

मस्जीषोः षुक्प्रत्ययो भवति । मद्गुक्षुर्मुनिः । इक्षुः पुण्ड्रकादिः ॥

तरतेरक्षुः ॥ १०९ ॥

तरतेरक्षुप्रत्ययो भवति । तरक्षुः श्वापदविशेषः ॥

कृषिचमितनिधन्यन्दिसर्जिखर्जिभ्य ऊः ॥ ११० ॥

कृष्यादिभ्य ऊः प्रत्ययो भवति । कर्षूः गर्तः । चमूः सेना । तनूः शरीरम् । धनूर्धान्यराशिः । अन्दूः पादकटकः । सर्जूः क्षारः । खर्जूः कण्डूः ॥

खड्यज्योर्डुक्जुकौ च ॥ १११ ॥

खड्यजिभ्यामूप्रत्ययो यथासङ्ख्यं चानयोर्डुक् (जुक्) चागमो भवति। खड्डूः बालानामाभरणम् । अज्जूः जननी ॥

कषेश्छ च ॥ ११२ ॥

कषेरूप्रत्ययः (श ? छ)कारश्चान्तादेशो भवति । कच्छूः पामा ॥

तृद्रोर्हुट् च ॥ ११३ ॥

आभ्यामूप्रत्ययो हुट् चास्यागमो भवति । तर्हूः दर्विः । दर्हूः कुष्ठभेदः ॥

मृजेर्गुणश्च ॥ ११४ ॥

मृजेरूप्रत्ययो वृद्धौ कृतायां गुणश्च भवति । मर्जूः रजकः शुद्धिश्च ॥

वहो धच् ॥ ११५ ॥

वहेरूप्रत्ययो धकारश्चान्तादेशो भवति । वधूः स्नुषा पत्नी स्त्री च ॥

कसिपद्यर्त्तिभ्यो णित् ॥ ११६ ॥

एभ्य ऊप्रत्ययो णिद् भवति । कासूः शक्तिः । पादूः पादुका । आरूः वृक्षविशेषः ॥

अडो लश्च वा ॥ ११७ ॥

अडेरूप्रत्ययो णित् लश्चान्तादेशो वा भवति । आडूः आलूः ...

नञि लम्बेर्नलोपश्च ॥ ११८ ॥

नञ्युपपदे लम्बेरूप्रत्ययो णित् नलोपश्च भवति । अलाबूः ॥

के शीङ एरट् चास्य ॥ ११९ ॥

क उपपदे शीङ ऊप्रत्यय एरट् चास्यागमो भवति । कशेरूः ॥

जनेर्बुक् च ॥ १२० ॥

जनेरूप्रत्ययो बुक् चास्यागमो भवति । जम्बूः ॥

कफ ईलेर्णिलुक् च ॥ १२१ ॥

कफ उपपदे ईलेरूप्रत्ययो णिलुक् च भवति । कफेलूः श्लेष्मातकः ॥

कृञः कन्धुट्[1] च ॥ १२२ ॥

करोतेरूप्रत्ययः कन्धुट् चास्यागमो भवति । कर्कन्धूः क्षुद्रबदरी ॥

धृषेर्दिधिष च ॥ १२३ ॥

धृषेरूप्रत्ययो दिधिष चास्यादेशो भवति । दिधिषूः ज्यायस्याः पूर्वपरिणीता पुंश्चली च ॥

दृभिचपोर्नुं च ॥ १२४ ॥

आभ्यामूप्रत्ययो नुमागमश्च भवति । दृम्भूः सर्पजातिः । चम्पूः कथा ॥

नृ[2]तिशृधिकुहिभ्यः कूः ॥ १२५ ॥

नृत्यादिभ्यः कूप्रत्ययो भवति । नृतूः नर्तकः । शृधूः शर्धनः । कुहूः अमावास्या ॥

ऋतेरमं च ॥ १२६ ॥

ऋतेः कूप्रत्ययः अमागमश्चास्य भवति । रतूर्नाम नदी ॥

भ्रमेर्डूः ॥ १२७ ॥

भ्रमेर्डूप्रत्ययो भवति । भ्रूर्नेत्रयोरुपरि रोमरेखा ॥

योरागूच् ॥ १२८ ॥

यौतेरागूच्प्रत्ययो भवति । यवागूः द्रवौदनम् ॥

---

१. 'कृ' ख. पाठः. २. 'ती' क. पाठः.

दिवेर्ऋन् ॥ १२९ ॥

दिवेः ऋन्प्रत्ययो भवति । देवा देवरः ॥

नियो डित् ॥ १३० ॥

नयतेः ऋन्प्रत्ययो डिद् भवति । ना पुरुषः ॥

सव्ये स्थः ॥ १३१ ॥

तिष्ठतेः सव्य उपपदे ऋन्प्रत्ययो भवति । सव्येस्था सारथिः ॥

सुञ्यसेः ॥ १३२ ॥

अस्यतेः सुञ्युपपदे ऋन्प्रत्ययो भवति । स्वसा भगिनी ॥

यतेर्वृद्धिश्च ॥ १३३ ॥

यतेः ऋन्प्रत्ययो भवति वृद्धिश्च । याता देवरभार्या ज्येष्ठभार्या च ॥

नञि नन्देः ॥ १३४ ॥

नन्देर्नञ्युपपदे ऋन्प्रत्ययो भवति वृद्धिश्च । ननान्दा भर्तृभगिनी ॥

पातेस्तृजिच्चे ॥ १३५ ॥

पातेस्तृच्प्रत्यय इकारश्चान्तादेशो भवति । पातीति पिता जनकः ॥

मानो लोपश्च ॥ १३६ ॥

मानस्तृच्प्रत्ययो भवति नलोपश्च । बहुलाधिकारात् कर्माणि । मन्यते पूज्यत इति माता जननी ॥

भ्राजेश्च ॥ १३७ ॥

तृच्प्रत्ययो लोपश्च भवति । भ्राता सोदर्यः ॥

दुहेरिट् किच्च ॥ १३८ ॥

दुहेस्तृच्प्रत्ययः कित् इडागमश्च भवति । दुहिता तनया ॥

जायां मिञः ॥ १३९ ॥

जा इत्येतस्मिन्नुपपदे मिञस्तृच्प्रत्ययो भवति । जायां प्रजायां मिनोतीति जामाता दुहितुः पतिः ॥

---

१. 'ब । कफ ईरेलैक । मा' ख. पाठः

नमेः पश्च ॥ १४० ॥

नमेस्तृच्प्रत्ययः पश्चान्तादेशो भवति । नप्ता पौत्रः ॥

आपो ह्रस्वश्च ॥ १४१ ॥

आप्नोतेस्तृच्प्रत्ययो ह्रस्वश्च भवति । अप्ता यज्ञः अग्निश्च ॥

हुपूभ्यामृत्विजि तृन्ननिट् च ॥ १४२ ॥

आभ्यामृत्विज्यभिधेये तृन्प्रत्ययो भवति, अनिट् चासौ भवति । होता ऋत्विक् । पोता ऋत्विक् । अनिड्वचनं पूञर्थम् ॥

नियः षुक् च ॥ १४३ ॥

नियः ऋत्विजि तृन्प्रत्ययः षुक् चागमो भवति । नेष्टा ऋत्विक् ॥

उदि गायश्च चित् ॥ १४४ ॥

उद्युपपदे गायतेश्च तृन्प्रत्ययश्चित् भवति । उद्गाता । उन्नेता ॥

प्रे स्तुशासिभ्याम् ॥ १४५ ॥

स्तौतिशासिभ्यां प्रोपपदे ऋत्विज्यभिधेये तृन्प्रत्ययो भवति । प्रस्तोता प्रशास्ता ऋत्विक् ॥

हृप्रस्थोः प्रतौ ॥ १४६ ॥

हरतेः प्रस्थः प्रपूर्वाच्च तिष्ठतेः प्रतावुपपदे ऋत्विज्यभिधेये तृन्प्रत्ययो भवति । प्रतिहर्त्ता ऋत्विक् । प्रतिप्रस्थाता ऋत्विक् ॥

त्विषेर्देवतायामितोऽच्च ॥ १४७ ॥

त्विषेर्देवतायामर्थे तृन्प्रत्ययः इकारस्य चाकारादेशो भवति । त्वष्टा सूर्यः । त(क्षणा ? क्ष्णो)तेस्तु तृचि त्वष्टा देववर्धकिः ॥

क्षदेर्युक्ते ॥ १४८ ॥

क्षदेर्युक्तेऽर्थे तृन्प्रत्ययो भवति । क्षत्ता नियुक्तो जातिश्च ॥

रातेर्डैः ॥ १४९ ॥

रातेर्डैप्रत्ययो भवति । राः द्रव्यम् । रायौ रायः । 'रायो हली'-त्यात्वम् ॥

द्युगमिभ्यां डोः ॥ १५० ॥

द्युगमिभ्यां डोप्रत्ययो भवति । द्यौः स्वर्गः अन्तरिक्षं च । गौः पृथिव्यादिः ॥

ग्लानुदिभ्यां डौः ॥ १५१ ॥

आभ्यां डौप्रत्ययो भवति ग्लौश्चन्द्रः । नौर्जलतरणम् । बहुलाधि-कारात् एजन्तत्वेऽपि रैप्रभृतयो नाव्ययानि भवन्ति ॥

अच इः ॥ १५२ ॥

अजन्तात् धातोरिप्रत्ययो भवति । रविः सूर्यः । कविः काव्यकर्ता । पविर्वज्रम् । हरिः शक्रः । दरिः प्रपातः ॥

खनिकष्यञ्ज्यसिवसिध्वनिसनिमणिग्रन्थिचरि-भ्यश्च ॥ १५३ ॥

खन्यादिभ्यश्च इप्रत्ययो भवति । खनिः आकरः कर्माणि । कषिः खनित्रम् । समाञ्जिः शिश्नः । (असिः खड्गः) । वसिः वसिता । ध्वनिः शब्दः । सनिः सम्भक्ता । मणिः रत्नम् । ग्रन्थिः पर्वसन्ध्यादिः । चरिः प्राकारशिखरम् ॥

उभेर्द्वत्रौ च ॥ १५४ ॥

इप्रत्ययो द्व त्र इत्येतावादेशौ भवतः । द्वौ सङ्ख्या त्रयः सैव ॥

भुजः कित् ॥ १५५ ॥

भुजेरिप्रत्ययः कित् भवति । भुजिर्भोक्ता ॥

कृगृशपृकुटिभिदिच्छिदिभ्यश्च ॥ १५६ ॥

एभ्यो धातुभ्य इप्रत्ययः कित् भवति । किरिः सूकरः । गिरिः पर्वतः कन्दुकश्च । शिरिः हिंस्रः । पुरिः पूजिता । कुटिर्गृहम् । भिदिः भेत्ता । छिदिः छेत्ता ॥

अंहिकुण्ठिकम्पान्नलोपश्च ॥ १५७ ॥

अंह्यादिभ्य इप्रत्ययः किन्नलोपश्च भवति । अहिः सर्पः । कुठिः कुठारः । कपिः मर्कटः ॥

तरतेः सन्वत् तुक् चाभ्यासस्य ॥ १५८ ॥

तरतेरिप्रत्ययः कित् सन्वच्च । अभ्यासस्य तुगागमश्च भवति । तित्तिरिः पक्षी ॥

इगुपधात् किन् ॥ १५९ ॥

इगुपधाद् धातोः किन्प्रत्ययो भवति । स्वरे विशेषः । कृषिः कर्षणम् । (सु ? सि) षिर्विविक्तः आषाढश्च । रुचिर्दीप्तिः । स्नुहिर्वृक्षः । स्तुरिस्तन्तुवायोपकरणम् । कुणिः कुण्डः । दुलिः कच्छपः । ऋषिर्मुनिर्वेदश्च ॥

वौ रिचेर्नुं च ॥ १६० ॥

वावुपपदे रिचेर्धातोः किन् प्रत्ययो भवति नुमागमश्च । विरिञ्चिर्ब्रह्मा ॥

क्रमितमिनभिस्तम्भामत इच्च ॥ १६१ ॥

क्रमादीनां किन्प्रत्यय अकारस्य चेकारादेशो भवति । क्रिमिः क्षुद्रजन्तुः । तिमिः मत्स्यविशेषः । निमिः राजा । स्तिभिः केतकादिसूची ॥

मनेरुच्च ॥ १६२ ॥

मनेः किन्प्रत्ययः अकारस्य चोकारो भवति । मुनिः ऋषिः ॥

हलिकलिकिलिकटिवटित्रुटिकुटिबलिवल्ल्यलिभ्य इन्
[॥ १६३ ॥

एभ्य इन्प्रत्ययो भवति । हलिर्महद्धलम् । कलिः कलहो युगं च । केलिः क्रीडा । कटिः शरीरावयवः । वटिः गुलिका । त्रोटिः चञ्चुः । कोटिः सङ्ख्या अग्रभागश्च । बलिर्दानव उपहारश्च । वल्लिः लता । अलिर्भ्रमरः ॥

हृपिशिरुहिवृतिविदिकीर्त्तिभ्यश्च ॥ १६४ ॥

एभ्य इन्प्रत्ययो भवति । हरिः विष्ण्वादिः । पेशिर्मांसशल्कः । रोहिर्वृक्षभेदः । वर्त्तिर्देशादिः । वेदिः इज्यादिस्थानम् । कीर्त्तिर्यशः ॥

भ्रमेः सम्प्रसारणं च ॥ १६५ ॥

भ्रमेरिन्प्रत्ययः सम्प्रसारणं च भवति । भृमिर्वायुः ॥

कृशृवासिवपिराजि(ध्रा ? ध्र)जिध्वजिसादिहनिकमिवमिफलिकशिवाशिवादिवारिसम्पादिभ्य इञ् ॥ १६६ ॥

एभ्यः इञ्प्रत्ययो भवति । कारिः तक्षादिः । शारिर्द्यूतोपकरणं हास्तिपर्याणं शारिका च । वासिस्तक्षोपकरणम् । वापिः पुष्करिणी । राजिः पङ्क्तिः । ध्राजिः पद्धतिः । ध्वाजिः पताका । सादिः आरोहः । घातिरस्त्रविशेषः । कामिः कामुकः । वामिः स्त्री । फालिः दलम् । काशिः वाराणसी । वाशिः झिल्लिका । वादिर्वक्ता । वारि पानीयं हस्तिबन्धनस्थानं च । सम्पादिः पक्षिराजः ॥

नहो भ च ॥ १६७ ॥

नह्यतेरिञ्प्रत्ययो भश्चान्तादेशो भवति । नाभिः चक्रमध्यं शरीरावयवो राजा च ॥

अलिशलिपलितलिघसिजम्याणिपणिभ्य इण् ॥१६८॥

एभ्य इण्प्रत्ययो भवति । आलिः सखी पङ्क्तिश्च । शालिर्धान्यविशेषः । पालिः सेतुबन्धः । तालिः आभरणं द्रवद्रव्यं भाण्डं च । घासिः अग्निः । जामिर्भगिनी । आणिर्द्वारकीलिका । पाणिर्हस्तः ॥

अज्यतिभ्यां पादे च ॥ १६९ ॥

अज्यतिभ्यां केवलाभ्यां पादे चोपपद इण्प्रत्ययो भवति । आजिः सङ्ग्रामः स्पर्धावधिश्च । आतिः पक्षी । पदाजिरनुचरः । पदातिः स एव ॥

अशो रुट् च ॥ १७० ॥

अश्नोतेरिण्प्रत्ययो रुट् चागमो भवति । अश्नुते शमिति राशिः । धान्यादिस्तूपः ॥

वातेर्डित ॥ १७१ ॥

वातेरिण्प्रत्ययो डित् भवति। विः पक्षी ॥

प्रे हृञः कूपे ॥ १७२ ॥

प्र उपपदे कूपेऽभिधेये हरतेरिण्प्रत्ययो डिद् भवति। प्रहिः कूपः ॥

कायः किः ॥ १७३ ॥

कायतेः किप्रत्ययो भवति। काकिः स्वरदोषः ॥

वर्धेरकिः ॥ १७४ ॥

वर्धयतेरकिः प्रत्ययो भवति। वर्धयतीति वर्धकिस्तक्षा ॥

सनेर्डखिः ॥ १७५ ॥

सनेर्डखिप्रत्ययो भवति। सनति सनुते वा सखा मित्रम्। सखायौ सखायः ॥

कौतेर्डिखिः ॥ १७६ ॥

कौतेर्डिखिप्रत्ययो भवति। किखिर्लोमशी ॥

मृकण्याविदधिभ्य ईचिः ॥ १७७ ॥

एभ्य ईचिप्रत्ययो भवति। मरीचिर्मुनिः मयूखश्च। कणीचिर्लता। अवीचिर्नरकविशेषः। दधीचिः राजर्षिः ॥

श्रेश्चित् ॥ १७८ ॥

श्रयतेरीचिप्रत्ययश्चिद् भवति। श्रयीचिश्चन्द्रमाः ॥

वेञो डित् ॥ १७९ ॥

वेञ ईचिप्रत्ययो डिच्च भवति। वीचिः कल्लोलः ॥

श्रीञो ढिः ॥ १८० ॥

श्रीञो ढिप्रत्ययो भवति। श्रेढिर्गणितव्यवहारः ॥

चमेरुच्च ॥ १८१ ॥

चमेर्ढिप्रत्ययः अकारस्य चोकारादेशो भवति। चुण्ढिः क्षुद्रवापी ॥

मुषेः किदुनट् च ॥ १८२ ॥

मुषेः ढिप्रत्ययः किदुनट् चागमो भवति । मुषुण्ढिः प्रहरणम् ॥

वेतेर्णिः ॥ १८३ ॥

वेतेर्णिप्रत्ययो भवति । वेणिः कबरी ॥

वितसिवसिसपिपदिभ्यस्तिप् ॥ १८४ ॥

एभ्यः तिप्प्रत्ययो भवति । वितस्तिरर्धहस्तः । बस्तिर्मूत्राधारः । सप्तिरश्वः । पत्तिः पदातिः ॥

भसेर्गट् च ॥ १८५ ॥

भसेस्तिप्प्रत्ययो गट् चागमो भवति । गभस्तिः सूर्यः रश्मिश्च ॥

यजेस्तिः ॥ १८६ ॥

यजतेस्तिप्रत्ययो भवति । यष्टिः दण्डः ॥

कुङो यषुट् च ॥ १८७ ॥

कवतेस्तिप्रत्ययो यषुट् चास्यागमो भवति । कोयष्टिः पक्षिविशेषः ॥

गिरः षुग्घ्रस्वश्च ॥ १८८ ॥

गिरतेस्तिप्रत्ययः षुगागमो ह्रस्वश्च भवति । गृष्टिः सकृत्प्रसूता गौः ॥

दृकृषिरिषिविषिमुषिशाशुच्यशिभ्यः क्तिन् ॥ १८९॥

द्रादिभ्यः क्तिन्प्रत्ययो भवति । दृतिः छागादित्वङ्मयो जलाधारः । कृष्टिः पण्डितः । रिष्टिः प्रहरणम् । विष्टिरवेतनकर्मकरः । मुष्टिर्हस्तसन्निवेशः । शितिः कृष्णः कृशश्च । शुक्तिर्मुक्तादिः । अष्टिः छन्दोविशेषः ॥

कुचिञोश्चिन्नुक् च ॥ १९० ॥

कौतेश्चिनोतेश्च क्तिन्प्रत्ययश्चित् तयोर्नुक् चागमो भवति । कुन्तिः राजा । चिन्तिः राजा ॥

अमेरतिः ॥ १९१ ॥

अमेरतिप्रत्ययो भवति । अमतिर्मार्गः ॥

युपाभ्यां कित् ॥ १९२ ॥

आभ्यामतिप्रत्ययः किद् भवति । युवतिः रमणी । पतिः भर्ता ॥

वहिवसिखल्यर्त्तिभ्यश्चित् ॥ १९३ ॥

वह्यादिभ्योऽतिप्रत्ययश्चिद् भवति । वहतिर्गौः । वसतिर्ग्रामसन्निवेशः । खलतिः शीर्णकेशः । अरतिः पद्मः ॥

वृञो व्रत च ॥ १९४ ॥

वृञोऽतिप्रत्ययश्चित् व्रतादेशश्च भवति । व्रततिः वल्ली ॥

वस्यर्त्तिभ्यामातिः ॥ १९५ ॥

आभ्यामातिप्रत्ययो भवति । वसातयो जनपदः । अरातिः शत्रुः ॥

अभौ यामाभ्याम् ॥ १९६ ॥

यातिमी(मा ? ना)त्योरभावुपपदे आतिप्रत्ययो भवति । अभियातिशत्रुः । अभिमातिः स एव ॥

यजो यश्च ॥ १९७ ॥

यजो धातोरातिप्रत्ययो यश्चान्तादेशो भवति । ययातिः राजा ॥

अविभूभ्यामन्तिः ॥ १९८ ॥

आभ्यामन्तिप्रत्ययो भवति । अवन्तिः राजा । भवन्तिः कालः ॥

शकेरुन्तिः ॥ १९९ ॥

शकेरुन्तिप्रत्ययो भवति । शकुन्तिः पक्षी ॥

अजिसञ्ज्यसिभ्यः क्थिन् ॥ २०० ॥

१. 'ज्य' क. पाठः.

अजि सञ्जि असि इत्येतेभ्यः क्थिन्प्रत्ययो भवति । अक्थिः वीथिमार्गः । सक्थि ऊरुमूलम् । अस्थि कीकसः ॥

सारेरथिन् ॥ २०१ ॥

सारेरथिन्प्रत्ययो भवति । सारथिः यन्ता ॥

तनेर्डिथिः ॥ २०२ ॥

तनेर्डिथिप्रत्ययो भवति । तिथिः प्रतिपदादिः ॥

अतेरिथिन् ॥ २०३ ॥

अतेरिथिन्प्रत्ययो भवति । अतिथिरभ्यागतः ॥

उषेरधिन् ॥ २०४ ॥

उषेरधिन्प्रत्ययो भवति । ओषधिः उद्भिद्विशेषः ॥

विदेः किद् रुट् च ॥ २०५ ।

विदेरधिन्प्रत्ययः कित् रुट् चास्यागमो भवति । विद्रधिर्व्याधिविशेषः ॥

चूर्यंगिभ्यां निः ॥ २०६ ॥

आभ्यां निप्रत्ययो भवति । चूर्णि भाष्यम् । अग्निः ज्वलनः ॥

वहिश्रुश्रियुक्षुभ्यो निन् ॥ २०७ ॥

वह्यादिभ्यो निन्प्रत्ययो भवति । वह्निः पावकः । श्रोणिः जघनम् । श्रेणिः सङ्घः पङ्क्तिश्च । निश्रेणिः सङ्क्रमः । योनिः उत्पत्तिस्थानम् । क्षोणिः पृथ्वी ॥

शाशीङोर्ह्रस्वश्च ॥ २०८ ॥

आभ्यां निप्रत्ययो ह्रस्वश्च भवति । शनिः सौरिः । शिनिर्यादवः ॥

घृसृधुवृषिप्रच्छिज्वरित्वरिभ्यः कित् ॥ २०९ ॥

एभ्यो निन्प्रत्ययः किद् भवति । घृणिः रश्मिः । सृणिः अङ्कुशम् । धुनिः नदी । वृष्णिर्यदुविशेषः । पृश्निः पर्णं कृशश्च । जूर्णिः पुराणः । तूर्णिः शीघ्रः ॥

पृषेर्वृद्धिश्च ॥ २१० ॥

पृषेर्निन्प्रत्ययो वृद्धिश्च भवति । पार्ष्णिः पादपश्चाद्भागः ॥

ऋतॄसृकृधृधम्यश्यविवृतिग्रहिरजिकटयटिभ्योऽनिः [॥ २११ ॥

एभ्यः अनिप्रत्ययो भवति । अरणिः अग्न्याधानकाष्ठम् । तरणिरादित्यः । सरणिर्मार्गः । करणिः अनुकृतिः । धरणिः पृथ्वी । धमनिर्मन्या । अशनिः वज्रम् । अवनिर्मार्गः । वर्त्तनिः मार्गः । ग्रहणिः जाठराग्न्याधारः । रजनिः रात्रिः । कटनिः शैलमेखला । अटनिः चापकोटिः ॥

अदेर्मुट् च ॥ २१२ ॥

अदेरनिप्रत्ययो मुट् चागमो भवति । अग्निः अग्निः ॥

कृषेरादेश्च चः ॥ २१३ ॥

कृषेरनिप्रत्यय आदेश्च चकारादेशो भवति । चर्षणिर्विदग्धः ॥

आङि शुषेः सनः ॥ २१४ ॥

आङ्युपपदे शुषेः सन्नन्तादनिप्रत्ययो भवति । आशुशुक्षणिर्ज्वलन ॥

क्षिपेः कित् ॥ २१५ ॥

क्षिपेरनिप्रत्ययः किद् भवति । क्षिपणिः आयुधम् ॥

अर्त्तेरत्निच् ॥ २१६ ॥

अर्त्तेरत्निच्प्रत्ययो भवति । अरत्निः उत्कनिष्ठो हस्तः ॥

शकेरुनिः ॥ २१७ ॥

शकेरुनिप्रत्ययो भवति । शकुनिः पक्षी ॥

नीदलिभ्यां मिः ॥ २१८ ॥

आभ्यां मिप्रत्ययो भवति । नेमिश्चक्रधारा । दल्मिः शङ्कुः ॥

अर्त्तेरू च ॥ २१९ ॥

अर्त्तेर्मिप्रत्यय ऊश्चादेशो भवति । ऊर्मिस्तरङ्गः ॥

अशो रश च ॥ २२० ॥

अशोर्मिप्रत्ययः रशादेशश्च भवति । रश्मिः प्रग्रहो मयूखश्च ॥

भुवः क्मिन् ॥ २२१ ॥

भुवः क्मिन्प्रत्ययो भवति । भूमिर्वसुधा ॥

क्षणेर्डयिः ॥ २२२ ॥

क्षणेर्डयिः प्रत्ययो भवति । क्षयिः पक्षिविशेषः ॥

अङ्किवङ्किमङ्क्यंहिसद्यशूभ्यो रिः ॥ २२३ ॥

एभ्यो रिप्रत्ययो भवति । अङ्क्रिः वंशकतृणिकः । वङ्क्रिः पर्शुकः । माङ्क्रिः प्रवकः । अङ्घ्रिः पादः । सद्रिः वृक्षविशेषः । अश्रिः कोटिः ॥

भूसूभ्यां कित् ॥ २२४ ॥

आभ्यां रिप्रत्ययः कित् भवति । भूरिः प्रभूतम् । सूरिः पण्डितः ॥

रासीदशाकिक(ति ? दि)भ्यास्त्रिप् ॥ २२५ ॥

एभ्यः त्रिप्प्रत्ययो भवति । रात्रिः रजनी । सात्रिः कुञ्जरः । शाक्त्रिः मुनिः । कत्रिः ॥

अदेः क्रिंश्च ॥ २२६ ॥

अदेः क्रिंश्च प्रत्ययो भवति । अद्रिः पर्वतो वृक्षश्च ॥

कुशित्रिशिभ्याम् ॥ २२७ ॥

आभ्यां क्रिन्प्रत्ययो भवति । कु(श्रीः ? श्रिः) । वि(श्रीः ? श्रिः) ॥

कुपेर्दुक् च ॥ २२८ ॥

कुपेः क्रिन्प्रत्ययो दुक्चास्यागमो भवति । कुब्द्रिः ॥

वल्ल्यर्त्तिकृतिभ्योऽरिः ॥ २२९ ॥

एभ्यः अरिप्रत्ययो भवति । वल्लरिः लता सस्यमञ्जरी च । अररिः कवाटम् । कर्त्तरिः केशादिकर्तनयन्त्रम् ॥

अङ्गिजसिसहिभ्य उरिन् ॥ २३० ॥

एभ्य उरिन्प्रत्ययो भवति । अङ्गुरिः करशाखा । जसुरिः क्रोधः । सहुरिः सूर्यः ॥

पाट्यञ्जिभ्यामलिच् ॥ २३१ ॥

आभ्यामलिच्प्रत्ययो भवति । पाटयतीति पाटलिर्वृक्षविशेषः । अञ्जलिः पाणिसन्निवेशः ॥

धूञ्मूङ्माङ्शलिभ्यो लिग्लिणौकुलिच्मलिचः ॥ २३२ ॥

धूञ् मूङ् माङ् इत्येतेभ्यः शलेश्च ण्यन्तात् यथासङ्ख्यं लिक् लिण् औकुलिच् मलिच् इत्येते प्रत्यया भवन्ति । धूयतेऽसाविति धूलिः पांसुः । मूयते बध्यतेऽसाविति मौलिः जूटः । (मि)मी(य?)ते शब्दायतेऽसाविति मौकुलिः काकः । शालयत्यात्मानमुच्चैस्त्वादिति शाल्मलिर्वृक्षविशेषः ॥

दवृभ्यां विन् ॥ २३३ ॥

आभ्यां विन्प्रत्ययो भवति । दर्विः तन्तुः । वर्विः शकटम् ॥

जॄशॄस्तॄजागृक्रुं[1]नीघृं[2]षिभ्यो क्विन् ॥ २३४ ॥

एभ्यो क्विन्प्रत्ययो भवति । जीर्विः वृद्धः । शीर्विः हिंस्रः । स्तीर्विः गर्विष्ठः । जागृविर्जागरूकः । कृविः रुद्रः राजा च । यदुपञ्चं कुरव इति पुरा पञ्चालानाचक्षते । नीविः परिधानग्रन्थिः । घृष्विः वराहः ॥

छविस्थविकिकिदीविदीदिव्यटविशिबयः ॥ २३५ ॥

एते शब्दा विन्नन्ता निपात्यन्ते । छास्थोर्ह्रस्वश्च । छविः स्रुक् । स्थविः प्रसेवकः तन्तुवायश्च । किराटीवो (?) दीर्घश्च । किकीति कुर्वन् कूजन् दीव्यति किकिदीविः चाषः । दिवो द्वे दीर्घश्च । दीव्यन्त्यस्मिन्निति दीदिविः स्वर्गः । अटेर(विः । अ)टन्त्यस्यामिति अटविः अरण्यम् । शीङो ह्रस्वश्च । शेरतेऽस्मिन् प्रजाः सुखमिति शिबिः राजा ॥

---

१. 'तु' ख. पाठः. २. 'कृं' क. पाठः.

प्लुषिशुषिकुषिभ्यः सिक् ॥ २३६ ॥

एभ्यः सिक्प्रत्ययो भवति । प्लुक्षिर्दहनः । शुक्षिर्यवासकः । कुक्षिः कोष्ठैकदेशः ॥

अशेर्नित् ॥ २३७ ॥

अ(श्ना ? श्नो)तेः सिक्प्रत्ययो निद् भवति । अक्षि चक्षुः ॥

गोपादिष्वनेरासिः ॥ २३८ ॥

अनेर्गोपादिषूपपदेषु असिप्रत्ययो भवति । गोपानसिः सौधाग्रभागः छदिः । चित्रानसिः जलचरः । एकानसिः उज्जयिनी । वाराणसिः काशीनगरी ॥

वृपसाभ्यो नुट् च ॥ २३९ ॥

एभ्यो(नु ? ऽसि)प्रत्ययो नुट् चास्यागमो भवति । वर्णसिर्माता । पर्णसिर्जलचरः । सानसिः शाखा समानश्च ॥

व्रियो हिक् ॥ २४० ॥

(व्रियो हिक्)प्रत्ययो भवति । व्रीहिर्धान्यविशेषः ॥

अवितृस्तृतन्द्रितन्त्रिभ्य ईः ॥ २४१ ॥

एभ्य ईप्रत्ययो भवति । अवीः प्रकाशः । तरीः अग्निः । स्तरी धूमः । तन्द्री मोहनिद्रा । तन्त्रीः वीणादिगुणः ॥

वाते प्रमः कित् ॥ २४२ ॥

प्रपूर्वान्मीनातेर्वात उपपदे ईप्रत्ययः किद् भवति । वातं प्र(मि ? मी)णाति वातप्रमीः मृगः ॥

यापोर्द्वे च ॥ २४३ ॥

या पा इत्येताभ्यामीप्रत्ययः कित् द्विर्वचनं चानयोर्भवति ।ययीः अश्वः । पपीः सूर्यः ॥

---

१ 'षिक्कु' क. पाठः. २. 'कृ' ख. पाठः. ३. 'प्रे' क. पाठः.

लक्षेर्मुट् च ॥ २४४ ॥

लक्षेरीप्रत्ययो मुट् चास्यागमो भवति । लक्ष्मीः श्रीः ॥

तुवः किक्[1] ॥ २४५ ॥

तु इति सौत्रो धातुर्वृद्धौ बले च वर्तते । ततः किक्प्रत्ययो भवति । तुक् अपत्यम् । इकार उच्चारणार्थः ।

स्रुवश्चिक् ॥ २४६ ॥

(स्रु ? स्र)वतेश्चिक्प्रत्ययो भवति । स्रुक् जुह्वादिः ॥

तनेरनश्च वः ॥ २४७ ॥

तनेश्चिक्प्रत्ययः अनश्च वकारादेशो भवति । व इति सं(घातग्रह-णम् ।) त्वक् शरीरादिवेष्टनम् ॥

पारेरजिः ॥ २४८ ॥

पारेरजिप्रत्ययो भवति । पारक् प्राकारः शाकविशेषश्च ॥

भिषेः कित् ॥ २४९ ॥

भिषेरजिप्रत्ययः किद् भवति । भिषक् चिकित्सकः ॥

पणेरिज्यादेश्च वः ॥ २५० ॥

पणेरिजिप्रत्यय आदेश्च वकारादेशो भवति । वणिक् वैदेहकः ॥

वशेः कित् ॥ २५१ ॥

वष्टेरिजिप्रत्ययः किद् भवति । उशिक् कान्तः ॥

भृञ उच्च ॥ २५२ ॥

भृञ इजिप्रत्ययः उकारश्चान्तादेशो भवति । भुरिक् एकाक्षराधिक-पादमृक्छन्दः ॥

लङ्घेरटिर्नलोपश्च ॥ २५३ ॥

---

१. 'तू' ख. पाठः.

लङ्घेरटिप्रत्ययो नलोपश्च भवति । लघट् लघुशकटम् ॥

सर्त्तेरडिः ॥ २५४ ॥

सर्तेरडिप्रत्ययो भवति । सरट् उष्ट्रजातिः ॥

ईडेरविडिङ् ह्रस्वश्च ॥ २५५ ॥

ईडेरविडिङ्प्रत्ययो ह्रस्वश्च भवति । इडविट् विश्रवाः ॥

भातेर्डवतुः ॥ २५६ ॥

भातेर्डवतुप्रत्ययो भवति । तत्रभवान् पूज्यः ॥

बृहिमहिपृषिभ्योऽतिः शतृवच्च ॥ २५७ ॥

बृह्यादिभ्यो धातुभ्योऽतिप्रत्ययः शतृवच्च भवति । तेनैषां गुणाभाव उगित्कार्याणि च भवन्ति । बृहत् अलघु । महान् गुरुः । महान्तौ महान्तः । महती । पृषत् जलबिन्दुः । पृषती पृषन्ति । 'स्थूलपृषतीमालभेत' ॥

गमेर्डिद् द्वे च ॥ २५८ ॥

गमेरतिप्रत्ययः शतृवच्च डित् द्विर्वचनं भवति । जगत् विश्वम् । जगती पृथ्वी । जगती छन्दः ॥

संश्चत्तृपद्वेहदादयः ॥ २५९ ॥

संश्चदादयोऽतिप्रत्ययान्ता निपात्यन्ते । समि चिञः सुट् डिच्च । संचिनोतीति संश्चत् कुहकः । तृम्पेर्नलोपश्च । तृम्पतीति तृपत् चन्द्रमाः । वौ हनो डिद् वेश्च गुणः । विहन्ति गर्भमिति वेहत् अप्रसवा गौः । आदिग्रहणात् रेहद्वियत्पुरीतदादयो भवन्ति ॥

हसृरुहियुषिभ्य इतिः ॥ २६० ॥

एभ्य इतिप्रत्ययो भवति । हरित् वर्णः कंकुष्ठम् । सरित् नदी । रोहित् मृगजातिः । योषित् स्त्री ॥

ताडेर्णिलुक् च ॥ २६१ ॥

ताडेरितिप्रत्ययो णिलुक् च भवति। ताडित् विद्युत् ॥

उदके श्वेर्डितिः ॥ २६२ ॥

श्वयतेरुदके उपपदे डितिः प्रत्ययो भवति। उदकेन श्वयति उदश्वित् तक्रम्। संज्ञायामुदकस्योदभावः ॥

मृङ उतिः ॥ २६३ ॥

मृङ उतिप्रत्ययो भवति। मरुतो देवाः। मरुद् वायुः ॥

ग्रो मुट् च वा ॥ २६४ ॥

गिरतेरुतिप्रत्ययो मुट् चास्यागमो वा भवति। गरुत् बर्हिः पक्षश्च। गर्मुत् तृणं मधुमक्षिका च ॥

शकेर्ऋतिः ॥ २६५ ॥

शकेः ऋतिप्रत्ययो भवति। शकृत् पुरीषम् ॥

यजेः कश्च ॥ २६६ ॥

यजेर्ऋतिप्रत्ययः कश्चान्तादेशो भवति। यकृत् दहरपद्मम् ॥

पातेः कृथिः ॥ २६७ ॥

पातेः कृथिप्रत्ययो भवति। पृथो नाम क्षत्रियः ॥

युष्यसिभ्यां मदिक् ॥ २६८ ॥

आभ्यां मदिक्प्रत्ययो भवति। युष्मान् अस्मानिति सर्वनाम्ना प्रत्यङ् परात्मा चाभिधीयते ॥

त्यजितनियमिभ्यो डदिः[1] ॥ २६९ ॥

एभ्यो डदिप्रत्ययो भवति। त्यत्। तत्। आभ्यां सर्वनामभ्यां पूर्वप्रक्रान्तं परामृश्यते। यदित्यनेन सर्वनाम्ना कार्येऽधिक्रियमाणमुद्दिश्यते ॥

एतेस्तदिः ॥ २७० ॥

एतेस्तदिप्रत्ययो भवति। एतत्। अनेन सर्वनाम्ना प्रकृतमपरोक्षमदूरस्थं चापदिश्यते ॥

---

१. 'जयिभ्यो' क. पाठः.

शृदृभसिभ्योऽदिः ॥ २७१ ॥

एभ्यः अदिप्रत्ययो भवति । शरत् ऋतुविशेषः । दरदो नाम जनपदः । भसत् जघनम् ॥

पुरः सुट्[1] च ॥ २७२ ॥

पिपर्त्तेः अदिप्रत्ययः सुट् चास्यागमो भवति । पर्षत् सभा ॥

दृणातेर्ह्रस्वश्च[2] ॥ २७३ ॥

दृणातेरदिप्रत्ययः ससुट्को ह्रस्वश्च भवति । दृषत् शिला ॥

युवृषितक्षिराजिधन्विपञ्चिद्युप्रतिदिविभ्यः कनित् [॥ २७४ ॥

युप्रभृतिभ्यः कनित्प्रत्ययो भवति । युवा तरुणः । वृषा इन्द्रः । तक्षा वर्धकिः । राजा पार्थिवः । धन्वा निर्जलो देशः धनुश्च । पञ्च सङ्ख्या । द्युवाभिगन्ता । प्रतिदिवा व्योम ॥

सप्यशूभ्यां (स्तु ? तु)ट् च ॥ २७५ ॥

सपः सौत्रो धातुः । सप अशू इत्येताभ्यां कनित्प्रत्ययः तुट् चास्यागमो भवति । सप्त सङ्ख्या । अष्ट सङ्ख्या ॥

नुदंशिभ्यां गुणश्च ॥ २७६ ॥

आभ्यां कनित्प्रत्ययो गुणश्च नौतेर्भवति । नव सङ्ख्या । दश सङ्ख्या ॥

श्वन्नुक्षन् पूषन् प्लीहन् क्लेदन् मज्जन् मूर्धन् अर्यमन् विश्वप्सन् परिज्वन् मातरिश्वन् मघवन् ग्रावन्नहन् महन्नथर्वन् इति ॥ २७७ ॥

एते शब्दाः कनित्प्रत्ययान्ता निपात्यन्ते । श्वयतेः सम्प्रसारणाभाव इलोपश्च । श्वयतीति श्वा सारमेयः । रक्षतीत्युक्षा वृषः । पुषिप्लिहोर्दीर्घश्च । पूषा सूर्यः । प्लीहा शरीरान्तर........वयसः । क्लिदेर्गुणः । क्लेदा

1. 'क्', 2. 'श्व । श्वन्नु' ख. पाठः.

इन्दुः। मज्जतीति मज्जा अस्थिसारः। मूर्च्छतीति मूर्धा शिरः। अरावामेर्णिलुक् च। अरीनामयति अर्यमा सूर्यः। विश्वं प्साति विश्वप्सा कालः। परौ जुव उवङभावः। परिजवतीति परिज्वा सूर्यः। मातरि अन्तरिक्षे श्वयति मातरिश्वा वायुः। 'सप्तम्यास्तत्पुरुषे कृति बहुलमि'त्यलुक् सम्प्रसारणाभावेकारलोपौ च श्वयत्। मङ्केर्नो लोपोऽव (श्च)। मघिः कैतवे। मङ्कतीति मघवा इन्द्रः। ग्रसतेरावसः। ग्रसत इति ग्रावा पर्वत उपलश्च। अंहेर्नलोपश्च। अंहत इत्यहः दिवसः। महीयतेरीयलोपश्च। महं करोतीति महन् महत्त्वम्। खर्वेर्नञि खस्थश्च। न खर्वतीत्यथर्वा ऋषिः। इतिकरणादन्येऽपि स्नेहन्नादयो भवन्ति॥

## स्नामदिपद्यर्त्तिपॄशकिभ्यो वनिप्॥ २७८॥

एभ्यो वनिप्प्रत्ययो भवति। स्नावा स्नायुः। मद्वा हसः। पद्वा पादः। अर्वा अश्वः। पर्वा सन्धिः। शक्वा वर्धकिः। शक्वरी छन्दः सुरभिश्च। शाक्वरः वृषः॥

## शीङ्क्रुशिरुहिजिक्षिहृ[२]सृवृभ्यः क्वनिप्॥ २७९॥

शीङादिभ्यः क्वनिप्प्रत्ययो भवति। शीवा अजगरः। क्रुश्वा सृगालः। रुह्वा वृक्षः। जित्वा धर्मः। जित्वरी वाराणसी। क्षित्वा मृत्युः। हृत्वा रुद्रः। सृत्वा कालः। वृत्वा आकाशः॥

## सृजेः कश्च॥ २८०॥

सृजेः क्वनिप्प्रत्ययः कश्चान्तादेशो भवति। सृक्वणी आस्योपान्तौ॥

## ध्याप्योः प्रसारणं च॥ २८१॥

ध्यै प्यै इत्येतयोः क्वनिप्प्रत्ययो भवति सम्प्रसारणं च। ध्यायतीति धीवा मनीषी। पीवा पीनः॥

## अतेर्धश्च॥ २८२॥

अतेः क्वनिप्प्रत्ययो धश्चान्तादेशो भवति। अध्वा मार्गः॥

१. 'हव म', २. 'हृ' क. पाठः.

मनिन् ॥ २८३ ॥

सर्वधातुभ्यो बहुलं मनिन्प्रत्ययो भवति । क्रियत इति कर्म व्यापारः । चरति स्म तत् तनाविति चर्म अजिनम् । म्रियतेऽनेनेति मर्म शरीरदेशः । वृणोतीति वर्म सन्नाहः । नृणन्त्यनेनेति नर्म परिहासः । शृणाति सन्तापमिति शर्म सुखम् इत्यादि ॥

व्योमन् रोमन् लोमन् क्लोमन् हेमन् वेमन् नामन् ललामन् आत्मन् पाप्मन् यक्ष्मन् पक्ष्मन्नूष्मन् वर्ष्मन् सीमन् ब्रह्मन्निति ॥ २८४ ॥

व्योमादयः शब्दा मनिन्प्रत्ययान्ता निपात्यन्ते । व्ययतेरोत्वम् । व्ययतीति व्योम आकाशम् । रुहेर्हलोपश्च । रोहतीति रोम तनूरुहः । तस्यैव लत्वम् । लोम तदेव । क्लमेरत उच्च । क्लाम्यतीति क्लोम शरीरान्तरावयवः । ह्राको वा ह्रा(गो ? ङो) वा एत्वम् । जहाति जिहीते वा तदिति हेम हिरण्यम् । वेञ आत्वाभावः । वयन्त्यनेनेति वेम तन्तुवायोपकरणम् । (म्नायतेऽनेनेति नाम ।) लातेर्लत्वं च । लाति तदिति ललाम भूषणम् । अतेर्दीर्घश्च । अततीत्यात्मा क्षेत्रज्ञः । पातेस्तः पश्च । पातयतीति पाप्मा अधर्मः । यसेः कः षुक् च । यस्यत्यनेनेति यक्ष्मा रोगः । पञ्चेर्नलो(पश्च ? पः षुक् च) । पञ्चते तदिति पक्ष्म अक्ष्यादिलोम । उषेर्दीर्घश्च । उषतीत्यूष्मा अनाविर्भूतरूपं तेजः । वृ(द्धः ? धेः) ष च । वर्धते स्म वर्ष्म शरीरम्[1] । स्यतेरीत्वं च । स्यतीति सीमा आघाटः । बृंहेर्नलोप (उपधाया र)श्च । बृंहतीति ब्रह्म आत्मतत्त्वम् । इतिकरणात् रुक्मतोक्मशुष्मादयो भवन्ति ॥

गमेरिनिः ॥ २८५ ॥

गमेरिनिप्रत्ययो भवति । गमिष्यतीति गमी पथिकादिः ॥

आङि च णित् ॥ २८६ ॥

गमेः केवलादाङि चोपपदे इनिप्रत्ययो णिद् भवति । गमिष्यतीति गामी प्रस्थितादिः । आगामी प्रोषितादिः ॥

भुवश्च ॥ २८७ ॥

---

१. 'उच्छ्रायः ।' क. पाठः.

भुवश्चेनिप्रत्ययो णिद् भवति । भविष्यतीति भावी कर्मविपाकादिः ॥

प्रे स्थश्च ॥ २८८ ॥

प्र उपपदे तिष्ठतेश्च इनिप्रत्ययो णिद् भवति । प्रस्थास्यतीति प्रस्थायी पथिकादिः ॥

यातेः प्रतौ च ॥ २८९ ॥

यातेर्धातोः प्रतौ चकारात् प्रे चोपपदे इनिप्रत्ययो णिद् भवति । प्रतियास्यतीति प्रतियायी । प्रयायी ॥

बुधश्च ॥ २९० ॥

बुधश्च प्रतौ प्रे चोपपदे इनिप्रत्ययो भवति । प्रतिभोत्स्यते प्रतिबोधी बालादिः ॥

परमे स्थः कित् ॥ २९१ ॥

तिष्ठतेः परम उपपदे इनिप्रत्ययः किद् भवति । परमे पदे तिष्ठतीति परमेष्ठी ब्रह्मा । सप्तम्या 'हलदन्तात् सप्तम्याः संज्ञायामि'त्यलुक् ॥

मन्थः ॥ २९२ ॥

मथ्नातेरिनिप्रत्ययः किद् भवति । मथ्नातीति मन्थाः क्षुब्धः । मन्थानौ मन्थानः ॥

पतेस्थश्च ॥ २९३ ॥

पतेरिनिप्रत्ययः थश्चान्तादेशो भवति । पन्था मार्गः । पन्थानौ पन्थानः ॥

अर्त्तेर्भुक्षिनक् ॥ २९४ ॥

अर्तेर्भुक्षिनक्प्रत्ययो भवति । इयर्त्ति प्राप्नोति यज्ञभागमिति ऋभुक्षा इन्द्रः । ऋभुक्षाणौ ऋभुक्षाणः ॥

हृजनिभ्यामिमनिच् ॥ २९५ ॥

आभ्यामिमनिच्प्रत्ययो भवति । हरतीति हरिमा पामभेदः । जनयतीति जनिमा धर्मविशेषः ॥

भृवृस्तृसूभ्य ईमनि च ॥ २९६ ॥

एभ्य ईमनिच्प्रत्ययो भवति । भरीमा क्षमी । वरीमा तपस्वी । स्तरीमा प्रावारः । सवीमा प्रसूतिः ॥

## आपः क्विन् ह्रस्वश्च ॥ २९७ ॥

आप्नोतेः क्विन्प्रत्ययो ह्रस्वश्च भवति । आप्नुवन्ति आपः पानीयम्[1] ॥

## ककुप्त्रिष्टुबनुष्टुभः ॥ २९८ ॥

ककुभादयः शब्दाः क्विन्प्रत्ययान्ता निपात्यन्ते । (स्तु ?)स्कुभ्नातेः के सलोपश्च । कं वायुं ब्रह्म वा स्कुभ्नन्तीति ककुभो दिशः । ककुबुष्णिक् छन्दः । न्य(न्वो)स्सो पश्च । त्रीन् लोकान् स्तुभ्नातीति त्रिष्टुप् छन्दः । अनुष्टुप् छन्दः ॥

## इणो दमिक् ॥ २९९ ॥

एतेर्दमिक्प्रत्ययो भवति । इदम् । अनेन सर्वनाम्ना प्रत्यक्षमपदिश्यते ॥

## कौतेर्डिमिः ॥ ३०० ॥

कौतेर्डिमिप्रत्ययो भवति । किम् । अनेन सर्वनाम्ना अविज्ञातो वस्तुविशेषः पर्यनुयुज्यते ॥

## अवतेर्मिः ॥ ३०१ ॥

अवतेर्मिप्रत्ययो भवति । अवतीति ओं ब्रह्म ॥

## गपृदुर्वीधुर्वीभ्यः क्विप् ॥ ३०२ ॥

एभ्यः क्विप्प्रत्ययो भवति । गृणाति गीर्यते वा गीः वाक् । पूर्नगरी । दूर्वतीति दूः शरीरान्तरावयवः । धूर्वति, ततो धूः शकटाङ्गम् । आदिश्च ॥

## वार्द्वारौ ॥ ३०३ ॥

वार् द्वार् इत्येतौ शब्दौ क्विबन्तौ निपात्येते । वृणोतेर्वृद्धिः । वृणोतीति वाः पानीयम्[2] । वृण्वन्ति तामिति द्वाः द्वारम् ॥

---

१. 'म् । स्वभावाद् ह्रस्वत्वम् ॥', २. 'यम् । कर्मणि भः । वृ' क. पाठः.

चतेरुरन् ॥ ३०४ ॥

चतेरुरन्प्रत्ययो भवति। चत्वारः सङ्ख्या। चत्वारि चतस्रः ॥

दिवेर्डिविः ॥ ३०५ ॥

दिवेर्डिविप्रत्ययो भवति। द्यौः स्वर्गः आकाशश्च। दिवौ दिवः ॥

विशः क्विप् ॥ ३०६ ॥

विशेः क्विप्प्रत्ययो भवति। विशः प्रजाः। विशः वैश्याः पुरीषमपत्यं च ॥

विपाशेश्च ॥ ३०७ ॥

विपाशेश्च क्विप्प्रत्ययो भवति। विपाशयति वसिष्ठमिति विपाण्णाम नदी ॥

सहेः षष् च ॥ ३०८ ॥

सहेः क्विप्प्रत्ययः षष् चास्यादेशो भवति। षट् सङ्ख्या ॥

सजूषाशिषौ ॥ ३०९ ॥

सजूष् आशिष् इत्येतौ शब्दौ क्विबन्तौ निपात्येते। सह जुषन्तेऽस्यामिति सजूः सम्प्रीतिः। आशासत एनामिति आशीः इष्टार्थप्रार्थनम् ॥

अर्चिरुचिशुचिहुसृपिछादिछृदिभ्य इसिः ॥ ३१० ॥

एभ्य इसिप्रत्ययो भवति। अर्चिः दीप्तिः। रोचिस्तेजः। शोचिस्तदेव। हविः पुरोडाशादि। सर्पिः घृतम्। छदिरावरणम्। छर्दिर्वमनम् ॥

बृंहेर्नलोपश्च ॥ ३११ ॥

बृंहेरिसिप्रत्ययो नलोपश्च भवति। बर्हिः शिखी दर्भश्च ॥

द्युतेर्निदादेश्च जः ॥ ३१२ ॥

द्युतेरिसिप्रत्ययो निदादेश्च जो भवति। ज्योतिः प्रकाशः ऋक्षं च ॥

सहो ध च ॥ ३१३ ॥

सहेरिसिप्रत्ययो धश्चान्तादेशो भवति । सधिः सत्त्वम् ॥

जनेरुसिः ॥ ३१४ ॥

जनेरुसिप्रत्ययो भवति । जनुः जन्म ॥

अर्त्तिपॄवपियजिधनिभ्यो नित् ॥ ३१५ ॥

अर्त्यादिभ्य उसिप्रत्ययो निद् भवति । अरुः व्रणम् । परुः ग्रान्थिः । वपुः शरीरम् । यजुरच्छन्दाः श्रुति । धनुश्चापम् ॥

इणो णित् ॥ ३१६ ॥

इण उसिप्रत्ययो णिद् भवति । आयुर्जीवितम् ॥

चक्षेरसिक् च ॥ ३१७ ॥

चक्षेरसिक्प्रत्ययश्चकारादुसिश्च भवति । सम्यक् चष्टे सञ्चक्षाः ऋत्विक् । नॄंश्चष्टे नृचक्षा राक्षसः । चष्टे अनेन चक्षः ख्यातिः । चष्टे अनेनेति चक्षुर्नयनम् ॥

पातेर्डुंसुन् ॥ ३१८ ॥

पातेर्डुंसुन्प्रत्ययो भवति । पातीति पुमान् पुरुषः । उकार उगित्कार्यार्थः ॥

यमिदमिभ्यां डोस् ॥ ३१९ ॥

आभ्यां डोस्प्रत्ययो भवति । यम्यतेऽनेनेति योः विषयसुखम् । दाम्यतीति दोः बाहुः ॥

असुन् ॥ ३२० ॥

सर्वधातुभ्यो बहुलमसुन्प्रत्ययो भवति । अरतीति अरः । सरतीति सरः तटाकम् । विलम्बतीति (?) वयः पक्षी शरीरावस्था च । मीनाति दुःखमिति मयः सुखम् । तरत्यनेनेति तरः बलं वेगश्च । महयतीति मह ( उत्सव )स्तेजश्च । साहयतीति सहः बलं मार्गशीर्षश्च । रहयत्यन्यमिति रहः विविक्तम् । जनम् अ( न ? नि )ति चीकुर्व( न्नि ? दि)-त्यनः शकटम् । मनुत इति मनः चेतः । रजतीति रजः गुण:

परागश्च । चेततीति चेतः मनः । उच्यते इति वचो वचनम् । सीदन्त्यस्मिन्निति सदः भवनं सभा च । तेजयतीति तेजो महः । अनक्तीति अञ्जः स्नेहः । ताम्यतीति तमः अन्धकारम् । रुणद्धीति रोधस्तटम् । (त?)रक्षतीति रक्षो यातुधानः । तपतीति तपः पुण्यं ज्येष्ठमासश्च ॥

पिबतेरिच्च ॥ ३२१ ॥

पिबतेरसुन्प्रत्यय इकारश्चान्तादेशो भवति । पीयत इति पयः पानीयम् ॥

यजेः श च ॥ ३२२ ॥

यजेरसुन्प्रत्ययः शकारश्चान्तादेशो भवति । इज्यतेऽनेनेति यशः कीर्त्तिः ॥

उषिरञ्जिशॄभूभ्यः कित् ॥ ३२३ ॥

एभ्योऽसुन्प्रत्ययः किद् भवति । उष्यन्तेऽस्यां हवींषीति उषाः सन्ध्या । रज्यते अनेनेति रजः आत्मगुणः धूलिश्च । शृणाति तद्वियुक्तः शिरः उत्तमाङ्गम् । भवतीति भुवः अन्तरिक्षम् ॥

वस्यगिभ्यां णित् ॥ ३२४ ॥

आभ्याम् असुन्प्रत्ययो णिद् भवति । वस्ते तदिति वासः वस्त्रम् । 'अग कुटिलायां गतौ' । अगतीत्यागो व्यलीकम् ॥

उषेर्जश्च ॥ ३२५ ॥

उषेरसुन्प्रत्ययो जश्चान्तादेशो भवति । ओजो बलम् ॥

वहेः सुट् च ॥ ३२६ ॥

वहेरसुन्प्रत्ययः सुट् चास्यागमो भवति । वहति स्तनादिकमिति वक्षः भुजान्तरालम् ॥

स्रुरीभ्यां तुट् च ॥ ३२७ ॥

आभ्यामसुन्प्रत्ययस्तुट् चास्य भवति । स्रवतीति स्रोतः निर्झरः । रिणातीति रेतः शुक्लम् ॥

---

१. 'रणम्' क. पाठः.

इणो नुट् च ॥ ३२८ ॥

एतेरसुन्प्रत्ययो नुट् चास्य भवति । एतीति एनः पापम् ॥

शीङः फुट् च ॥ ३२९ ॥

शीङोऽसुन्प्रत्ययः फुट् चास्यागमो भवति । शेत इति शेफः शिश्नम् ॥

छादिरहोर्नुं ह्रस्वश्च ॥ ३३० ॥

आभ्यामसुन्प्रत्ययो नुं ह्रस्वश्च भवति । छादयति लवणिम्ना वाचमिति छन्दः गायत्र्यादिः । रहयतीति रंहो वेगः ॥

अमेर्भुक् च ॥ ३३१ ॥

अमेरसुन्प्रत्ययो भुक् चास्यागमो भवति । अमतीत्यम्भः पानीयम् ॥

अर्त्तेरुच्च ॥ ३३२ ॥

अर्त्तेरसुन्प्रत्यय उकारश्चान्तादेशो भवति । इयर्त्यालिङ्गनादिक मित्युरः बाहुमध्यम् ॥

व्याधौ शुट् च ॥ ३३३ ॥

अर्त्तेर्व्याधावभिधेये असुन्प्रत्ययः शुडागमश्च भवति । अर्शांसि गुदकीलाः ॥

उदके नुट् च ॥ ३३४ ॥

अर्त्तेरुदकेऽर्थेऽसुन्प्रत्ययो नुडागमश्च भवति । इयर्त्तीति अर्णः जलम् ॥

पातेस्थुट् च ॥ ३३५ ॥

पातेरुदकेऽर्थेऽसुन्प्रत्ययस्थुट् चास्य भवति । पातीति पाथ उदकम् ॥

बले जुट् च ॥ ३३६ ॥

पातेर्बलेऽर्थेऽसुन्प्रत्ययो जुट् चास्यागमो भवति । पातीति पाजः बलम् ॥

१. २. ३. 'प' ग. पाठः.

यातेर्दुक् च ॥ ३३७ ॥

यातेरसुन्प्रत्ययो दुगागमश्च भवति । यातीति यादः जलदुष्टसत्त्वम् ॥

नभेश्चित् ॥ ३३८ ॥

नभेरसुन्प्रत्ययश्चिद् भवति । नभ्नातीति नभः आकाशं श्रावणश्च ॥

इन्धेर्नलोपश्च ॥ ३३९ ॥

इन्धेरसुन्प्रत्ययो नलोपश्च भवति । इन्धे अनेन एधः इन्धनम् ॥

आपो ह्रस्वो नुट् च वा ॥ ३४० ॥

आप्नोतेरसुन्प्रत्ययो ह्रस्वश्च भवति नुट् चास्य वा । आप्नोतीति अपः सत्कर्म । अप्नस्तदेव ॥

अदेर्नुधौ च वा ॥ ३४१ ॥

अदेरसुन्प्रत्ययो भवति । नुमागमो धकारश्च अन्तादेशो[1] वा भवति । अद्यते तदित्यन्धः अन्नम् । अद्यते दृशा मनसा वा तदित्यदः । अनेन सर्वनाम्ना प्रत्यक्षं[2] विप्रकृष्टमप्रत्यक्षं[3] वा बुद्धिस्थमपदिश्यते ॥

इण्विधिभ्यामसिः ॥ ३४२ ॥

आभ्यामसिप्रत्ययो भवति । एतीत्ययः लोहम् । विधिः सौत्रो धातुः विधाने । वि(दधा ? ध)तीति वेधाः प्रजापतिः ॥

पुरोरेतःपयःसु धः कित् ॥ ३४३ ॥

दधातेः पुरःप्रभृतिषूपपदेषु आसिप्रत्ययः किद् भवति । पुरो धीयते पुरोधाः पुरोहितः । रेतो दधातीति रेतोधाः जनकः । पयो दधातीति पयोधाः पर्जन्यः ॥

रेपस्नेकूणसूधस्विहायसोकस्सुमनस्पुरूरवस्पुरुदंसोनेहस्-साङ्गिरोप्सरसः ॥ ३४४ ॥

---

१. 'गमो वा' क. पाठः. २. 'क्षमवि' ग. पाठः ३. 'कृष्टं वा' क पाठः

रेपस्प्रभृतयोऽसिप्रत्ययान्ता निपात्यन्ते । रपेरेश्चोपधायाः । रपतीति रेपः पापम् । रिचेर्नुट् कश्च । रिणक्तीति रेक्णः धनं पापं च । वहेर्धः प्रसारणं दीर्घश्च । उह्यत इति ऊधः आपीनम् । जहा(ती ? ति)- जिहीत्योर्वा युक् । विजहातीति विहायः आकाशम् । विजिहीत इति विहा(यः ? याः) पक्षी । उचेः कश्च । उच्यन्त्यस्मिन्निति ओकः सदनम् । सौ मानो ह्रस्वश्च । सुष्ठु मानयन्ति मान्यन्ते वा सुमनसः पुष्पाणि । पुरौ रौतेरुपपदं दीर्घत्वं च । पुरु रौति पुरूरवाः ऐलः, यमुर्वशी च(काम ? कर्म) । द(शे ? से)श्च नुट् । पुरु दसतीति पुरुंदसाः इन्द्रः । नञीहेर्गुणश्च । न ईहते अनेहाः कालः । अङ्गेरिरक् च । अङ्गतीत्यङ्गिराः ऋषिः । अप्सु सर्तेर्णित् । अद्भ्यः सरन्ति स्म अप्सरसः देवगणिकाः ॥

वशेः कनसिः ॥ ३४५ ॥

वशेः कनसिप्रत्ययो भवति । वष्टीति उशनाः शुक्रः ॥

दमेरुनसिः ॥ ३४६ ॥

दमेरुनसिप्रत्ययो भवति । दाम्यतीति दमुनाः अग्निः । केचिद् दीर्घं पठन्ति । दमूनाः ॥

चन्दे रमसिः ॥ ३४७ ॥

'चदि आह्लादने' इत्यस्माद्धातो रमसिप्रत्ययो भवति । चन्दतीति चन्द्रमाः निशानाथः ॥

अनसि वहेः क्विब् डश्चानसः ॥ ३४८ ॥

अनस्युपपदे वहेः क्विप्प्रत्ययः डश्चानसोऽन्तादेशो भवति । अनो वहति अनड्वान् सौरभेयः ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां द्वितीयस्याध्यायस्य प्रथमः पादः ॥

---

१, २. 'कन' क. पाठः. ३. 'क्वि ड', ४. 'क्वि प्र' ग पाठः.

अथ द्वितीयः पादः ।

जीवेरातृकन् वृद्धिश्च ॥ १ ॥

जीवेरातृकन्प्रत्ययो भवति वृद्धिश्च । जीवयतीति जैवातृकः वैद्यः ॥

इण्भीकापाशल्यतिमर्चिनिहाङ्भ्यः कन् ॥ २ ॥

इणादिभ्यः कन्प्रत्ययो भवति । एकः अन्यः असहायः संख्या च । भेकः दर्दुरः । काकः वायसः । पाकः बालः । शल्कः वल्कलः । अत्कः पायुः । मर्क्कः असुरः । निहाका गोधा ॥

युशुघुवीधूञां दीर्घश्च ॥ ३ ॥

युप्रभृतिभ्यः कन्प्रत्ययो दीर्घश्चैषां गुणापवादो भवति । यूका क्षुद्रजन्तुः । शूकः किंशारुः । घूकः कौशिकः । वीका पक्षिजातिः । धूका पताका ॥

कुरु[1]स्तूयी[2]कुदाधारार्चिवलिकलिभ्यः कः ॥ ४ ॥

कुप्रभृतिभ्यः कप्रत्ययो भवति । कोकः चक्रवाकः । तोकम् अपत्यम् । स्तोकमल्पम् । ऊकः कुन्दुमः । कर्कः वर्णः । दाकः यज्ञः । धाकः उदकम्[3] । राका पौर्णमासी कुमारी रजस्वला च । अर्कः सूर्यः गुल्मश्च । वल्कस्त्वक् । कल्कः कषायः ॥

कृसृवृविचिपुषिमुषिमूङ्शुभूभ्यः कित् ॥ ५ ॥

कृप्रभृतिभ्यः कप्रत्ययः किद् भवति । कृकः शिरोग्रीवा । सृका आयुधविशेषः । वृकः श्वापदम् । विक्कः करिपोतः । पुष्कः निस्सारम् । मुष्कः अण्डम् । मूकः अवाक् । शुकः पक्षी । भूकः कालः ॥

निष्कतुरुष्कोदर्कोल्कर्कशुल्कश्च फल्ककिञ्जल्कोल्का-ल्छेककेकादयः ॥ ६ ॥

---

१. 'स्तुवाक्' ख. पाठः. २. 'स्तुक्', ३. 'ओदनः ।' ग पाठः,

निष्कादयः शब्दाः कप्रत्ययान्ता निपात्यन्ते । नौ सदेर्डिच्च । निष्कः सुवर्णादिः । तूरेरुषग्घ्रस्वश्च । तुरुष्कः म्लेच्छः वृक्षश्च । उद्यर्तेर्निच्च । उदर्कः क्रियाफलम् । अलेररट् च । अलर्कः उन्मत्तः श्वा मदालसात्मजश्च । शलेरुच्चोपधायाः । शुल्कं रक्षानिर्वेशः । शुनि फालेर्ह्रस्वश्च । श्वफल्कः अन्धकविशेषः । किमि ञ्जो रश्च ऊः । किञ्जल्कः पुष्परेणुः । ज्वलेर्जलोपो वः प्रसारणं च । उल्का औत्पातिकं ज्योतिः । छ्यतिकायत्योरेत्वं च । छेकः मनीषी । केका मयूरवाक् । आदिग्रहणाद् ऋक्कास्थूक्कावृक्कादयो भवन्ति ॥

कृसृभृवृस्तुकुक्षुचरिचटिचणितम्यविदेविकनिमानिपञ्चिमञ्चिमशिक्षारिकुरिवृतिवल्लिमल्लिमल्ल्यलिभ्यो वुन् ॥ ७ ॥

कृप्रभृतिभ्यो वुन्प्रत्ययो भवति । करकः भृङ्गारः । करका वर्षपाषाणः । सरकः मद्यविशेषः । सरका मधुपानवारः । भरकः गोण्यादिः । वरकः वाजसनेयभेदः । स्तबकः पुष्पगुच्छः । कवकः अभक्ष्यद्रव्यविशेषः । क्षवकः राजसर्षपः । चरकः मुनिः । चटकः पक्षी । चणकः पक्षी मुनिः धान्यविशेषश्च । तमकः व्याधिः क्रोधश्च । अवका शैवलम् । देवका अप्सराः । देविका नदी । कनकं सुवर्णम् । मेनका अप्सराः । पेचकः हस्तिनो जघनभागः । मेचकः वर्णः । 'मनिपचिमचां नाम्नी'-त्येकारः । मशकः क्षुद्रजन्तुः । क्षारकं बालमुकुलम् । कोरकं प्रौढमुकुलम् । वर्तका वर्तिका वा शकुनिः । वल्लकी वीणा । मल्लकः शरावः । सल्लकी वृक्षः । अलका पुरी । अलकः केशविन्यासः ॥

कौ रुरुण्टिरण्टिभ्यः ॥ ८ ॥

रुप्रभृतिभ्यः कावुपपदे वुन्प्रत्ययो भवति । कुरवकः वृक्षः । कुरुण्टकः वर्णगुच्छः । कुरण्टकः स एव ॥

कटेर्नुं च वा ॥ ९ ॥

कटेर्वुन्प्रत्ययो नुमागमश्च वा भवति । कण्टकस्तरुरोम । कटकः वलयः ॥

उन्दिरुचितिलिपुलिपिटिक्षिपिघ्रुधूभ्यः कित् ॥ १० ॥

१. 'ल्य' ख पाठः.

एभ्यो वुन्प्रत्ययः किद् भवति । उदकं वारि । रुचकः आभरणविशेषः । तिलकः विशेषकः वृक्षश्च । पुलकः रोमाञ्चः । पिटकः क्षुद्रस्फोटकः । क्षिपका आयुधम् । ध्रुवका आवपनाविशेषः । ध्रुवका सैव ॥

कीचकार्भकधमकवधकजहकैरकैडकाश्मकादयः ॥ ११ ॥

कीचकादयः शब्दा वुन्प्रत्ययान्ता निपात्यन्ते । कचेरी चोपधायाः । कीचको वंशविशेषः । अर्त्तेर्भुक् च । अर्भकः बालः । ध्मो धम च । धमकः कर्मारः । हनो वध च । वधकः हन्ता । हो ह्वे च । जहकः कालः । ईरेर्गुणः । एरका उदकतृणजातिः । ईडेश्च गुणः । एडका अविजातिः । अशेर्मट् च । अश्मका जनपदः । आदिग्रहणादुपकवमकचम्पकादयो भवन्ति ॥

खजिबलिपतिभ्य आकः ॥ १२ ॥

एभ्य आकप्रत्ययो भवति । खजाकः[1] मन्थाः । बलाका पक्षिविशेषः । पताका वैजयन्ती ॥

शलिपटिमनिभ्यो नित् ॥ १३ ॥

एभ्य आकप्रत्ययो निद् भवति । शलाका एषणी द्यूतोपकरणं च । पटाका वैजयन्ती । मनाका हस्तिनी ॥

पिनाकपिण्याकश्यामाकपुलाकवार्त्ताकवृन्ताकज्योन्ताकादयः ॥ १४ ॥

पिनाकादयः शब्दा आकप्रत्ययान्ता निपात्यन्ते । पि(चे ? षे)र्नं षश्च । पिनष्टीति पिनाकः ऐशं धनुः । पिनाको दण्डः । पणरत इद् युक् च । पिण्याकः तिलादिकल्कः । श्यैङो मुट् च । श्यामाकः[2] व्रीहिविशेषः । पुलेर्गुणाभावश्च । पुलाकः अर्धस्विन्नविधाभेदः । वृतेर्वृद्धिः । वार्त्ताकी शाकविशेषः । तत्फलं[3] वार्त्ताकम् । नुं च । वृन्ताकी उच्चबृहती । तत्फलं[4] वृन्ताकम् । ज्युङो नुस्तुक् । ज्यवन्तेऽस्मिन् स्वेदा इति ज्योन्ताकं स्वेदसंज्ञ[5]विशेषः । आदिग्रहणात् गूपाकस्योनाकपाराकादयो भवन्ति ॥

---

१. 'खला: ।' क. पाठः. २. 'कः मुन्यन्नम् ।' ग. पाठः. ३, ४. 'तत्पकं', ५. 'सामवि' क. पाठः.

अलिकलिदलिपुलिव्रश्चिस्फटिपाकृषिभ्यः किकन् ॥ १५ ॥

एभ्यः किकन्प्रत्ययो भवति । आलिकं ललाटम् । कलिका कोरकम् । उत्कलिका ऊर्मिः । दलिकं दारु । पुलिकः मणिः । वृश्चिकः विषकीटः । स्फटिकः मणिः । पिकः कोकिलः । कृषिकः पामरः ॥

मुषेर्दीर्घश्च ॥ १६ ॥

मुषेः किकन्प्रत्ययो दीर्घश्च भवति । मूषिकः आखुः ॥

स्यमेर्यण इक् च ॥ १७ ॥

स्यमेः किकन्प्रत्ययो यण इग् दीर्घश्च भवति । सीमिका उपजिह्विका ॥

पिपीलिकेतिककुशिकहृदिकमाक्षिकादयः ॥ १८ ॥

पिपीलिकादयः शब्दाः किकन्प्रत्ययान्ता निपात्यन्ते । पीलेर्द्वे च । पिपीलिका मध्यक्षामा कीटजातिः । एतेस्तुट् च । इतिकः मुनिः । कुसेः श च । कुशिकः मुनिः । हृञो दक् च । हृदिकः यादवः । मषेः सुट् च । माक्षिका क्षुद्रजन्तुः । आदिग्रहणाच्छब्दिकाचूरिकाचूलिकादयो भवन्ति ॥

ऋच्यलीषिदूषिकषिहृषिदृशिमृडिवलिस्यम्यनिभ्यः कीकन् ॥ १९ ॥

ऋच्यादिभ्यः कीकन्प्रत्ययो भवति । ऋचीकः ऋषिः । अलीकम् असत्यम् । व्यलीकम् अपराधः । इषीका तृणशलाका । दूषीका अक्षिमलम् । कषीका कदलिका । हृषीकमिन्द्रियम् । दृशीकं मनोज्ञम् । मृडीकं सुखकृत् । वलीकं वेश्मदारु । स्यमीकं जलम् । अनीकं सेनाङ्गम् ॥

मृद्वीकातिन्तिडीकवाहीक[1]वल्मीककल्मलीककिङ्किणीकपुण्डरीकचञ्चरीकसमीकप्रतीकपूतीकफर्फरीकादयः ॥ २० ॥

मृद्वीकादयः शब्दाः कीकनप्रत्ययान्ता निपात्यन्ते । मृदेर्वुक् च । मृद्वीका द्राक्षा । तिमेस्तिडक् च । तिन्तिडीकः वृक्षाम्लः । वर्हेर्[2]वृद्धिश्च ।

१ 'ह्री' २ 'ह्रे' इ. पाठः

वाह्लीकः[1] राजा । वलेरूकू च । वल्मीकः नाकुः । कलेर्मलट् च । कल्मलीकं ज्वाला । कमेः किर्मि किण् च । किङ्किणीका घण्टिका । पुणेर्डरक् च । पुण्डरीकं पद्मं छत्रं व्याघ्रः दिग्गजश्च । चञ्चेररक् च । चञ्चरीको भ्रमरः । समेतेरीयङ्भावश्च । संयन्त्यस्मिन्निति समीकं सङ्ग्रामः । प्रातेस्तुगह्रस्वश्च । प्राति शरीरमिति प्रतीकमवयवः मुखं च । सुप्रतीको नाम दिग्गजः । पुवस्तुट् च । पूतीकं नाम तृणजातिः । पिपर्त्तेर्गुणे[2] द्वित्वं पकारयोः फत्वं रुक् चाभ्यासस्य । फर्फरीकं पल्लवम् । आदिग्रहणान्मर्मरीक-जर्जरीकझर्झरीकादयो भवन्ति ॥

## समि कसेरुकन् ॥ २१ ॥

कसेः सम्युपपदे उकन्प्रत्ययो भवति । सङ्कसुकः परापवादशीलः ॥

## कमितिम्योर्दुक् च ॥ २२ ॥

आभ्यामुकन्प्रत्ययो दुक् चागमो भवति । कन्दुकः क्रीडनकम् । तिन्दुकः वृक्षः ॥

## अंशिकच्योर्नुं[3] च ॥ २३ ॥

आभ्यामुकन्प्रत्ययो नुं चागमो भवति । अंशुकं वस्त्रम् । कञ्चुकः कूर्पासः ॥

## कुहेः कित् ॥ २४ ॥

कुहेरुकन्प्रत्ययः किद् भवति । कुहकः आश्च ... ॥

## क्रमेः कृं च वा ॥ २५ ॥

क्रमेरुकन्प्रत्ययः कृमादेशश्च वा भवति । क्रमुकः पूगः । कृमुको बन्धनम् ॥

## चुलुकोल्मुकचिबुकचूचुकजम्बुकगवेधुकामधुकभावुंक[4]-पृथुकादयः[5] ॥ २६ ॥

चुलुकादयः शब्दा उकन्प्रत्ययान्ता निपात्यन्ते । चुलुम्पेष्टिलोपश्च । चुलुम्पतीति चुलुकः करकोशः । ज्वलेर्वः प्रसारणं जलोपो मुक् च ।

---

१. 'ल्ही' ग. पाठः. २. 'र्तेर्द्वि' क पाठः. ३. 'वा' ख. पाठः. ४. 'बु' ख. पाठः ५. 'कादयः' ख. पाठः.

ज्वलतीति उल्मुकम् अलातम् । चेर्बुक् च । चिनोतीति चिबुकम् आस्याधो-भागः । चतेरत ऊत्सुभ । चूचुकः स्तनाग्रभागः । जमेर्बुक् च । जम्बुकः सृगालः । इन्धेर्गवोपपदं च । गवि पानीये इन्धे गवेधुका नाम तृणजातिः । मनेर्धश्च मधुकः यष्टिमधु । भातेर्वुक् च । भावुकः भगिनीपतिः । प्रथेः प्रसारणं च । पृथुकः बालः व्रीह्याद्यभूषणं च (?) । आदिग्रहणात् मड्डु-कवालुकीवालुकादयो भवन्ति ॥

मृकणिजलिवलिबन्धिभल्लिभ्य ऊकः ॥ २७ ॥

एभ्यः ऊकप्रत्ययो भवति । मरूकः निर्दशनेभः । कणूकः धान्य-स्तोकः । जलूका जलजन्तुः । वलूकः उपलमूलम् । बन्धूकः बन्धुजीवः । भल्लूकः अच्छभल्लः ॥

शलिमण्डिभ्यां णित् ॥ २८ ॥

आभ्यामूकप्रत्ययो णिद् भवति । शालूकं कन्दविशेषः । मण्डूकः दर्दुरः ॥

मधूकोलूकोरुबूकशम्बूकवरूकादयः ॥ २९ ॥

मधूकादयः शब्दा ऊकप्रत्ययान्ता निपात्यन्ते । मदेर्धश्च । मदय-तीति मधूकः वृक्षजातिः । वलेरुच्चोपधायाः । उलूकः पक्षी । उरौ वः किच्च । उरु वाति उरुबूकः एरण्डः । शमेर्बुद् च । शम्बूकः क्षुद्रशङ्खः । वृधेर्लोपश्च । वर्धत इति वरूकस्तृणजातिः । आदिग्रहणाद् वधूकानूकादयो भवन्ति ॥

कोऽङ्को रो लश्च वा ॥ ३० ॥

किरतेरङ्कप्रत्ययः रेफस्य लकारादेशश्च वा भवति । करङ्कः समुद्रः । कलङ्कः लाञ्छनम् ॥

रालापाकाभ्यः कित् ॥ ३१ ॥

एभ्योऽङ्कप्रत्ययः किद् भवति । रातीति रङ्कः अबलीयान् । लाति शोभामिति लङ्का नाम पुरी । पातीति पङ्कः कर्दमः । कायतीति कङ्कः पक्षी ॥

कलेरविङ्कः ॥ ३२ ॥

कलेरविङ्कप्रत्ययो भवति । कलविङ्कः गृहचटकः ॥

क्रमेरलकः ॥ ३३ ॥

१. 'ड्ड', २. 'ड्ड', ३. 'व' न. पाठः,

क्रमेरेलकप्रत्ययो भवति । क्रमेलकः करभः ॥

लूभीशीङ्शिङ्घिभ्य आनकः ॥ ३४ ॥

लुनात्यादिभ्य आनकप्रत्ययो भवति । लुनन्ति धान्यादिकमस्मिन्निति लवानको नाम देशः । बिभ्यत्यस्मादिति भयानकः भयङ्करः । शेत इति शयानकोऽजगरः । शिङ्घत्यनेनेति शिङ्घानकः श्लेष्मा अयःपुरीषं च ॥

अनेर्डित् ॥ ३५ ॥

अनेरानकप्रत्ययो डिद् भवति । अनतीत्यानकः पटहः ॥

कनेरीनकः ॥ ३६ ॥

कनेरीनकप्रत्ययो भवति । कनतीति कनीनकः कनीनका वा अक्षितारका ॥

कृतिभिदिलतिपुतिभ्यः क्तिकन् ॥ ३७ ॥

एभ्यः क्तिकन्प्रत्ययो भवति । कृत्तिका नक्षत्रम् । भित्तिका कुड्यम् । लतिपुती सौत्रधातू । लत्तिका गोधा । पुत्तिका मधुमक्षिका ॥

इष्याशिभ्यां क्तकन् ॥ ३८ ॥

आभ्यां क्तकन्प्रत्ययो भवति । इष्टका मृद्विकारः । अष्टका श्राद्धकालः ॥

भियो द्वे च ॥ ३९ ॥

भियः क्तकन्प्रत्ययो द्विर्वचनं च भवति । बिभीतकः अक्षः ॥

हृरुहिपिण्डिभ्य ईतकः ॥ ४० ॥

एभ्यः ईतकप्रत्ययो भवति । हरति रोगानिति हरीतकी पथ्या । रोहीतको नाम वृक्षः । पिण्डीतकः करहाटः ॥

कुषेः कित् ॥ ४१ ॥

कुषेः ईतकप्रत्ययः कित् भवति । कुष्णाति वधबन्धनादात्मानमिति कुषीतको मुनिः ॥

चण्डिभल्लिभ्यामातकः ॥ ४२ ॥

आभ्यामातकप्रत्ययो भवति । चण्डातकं नर्त्तक्यादीनामर्धोरुकं वासः । भल्लातको वृक्षविशेषः ॥

श्लेष्मातकाम्रातकामिलातकपिष्टातकादयः ॥ ४३ ॥

एते शब्दा आतकप्रत्ययान्ता निपात्यन्ते । श्लिषेर्मुट् च । श्लिष्यतीति श्लेष्मातकः कफेलुः । अमे रट् वृद्धिश्च । आम्रातको वृक्षविशेषः । नञि म्लायतेर्मिल च । न म्लायतीत्यमिलातको वर्णपुष्पः । पिषेस्तुक् च । पिष्यत इति पिष्टातकं वर्णचूर्णम् । आदिग्रहणात् कतकाश्मन्तककोशातक्यादयो भवन्ति ॥

शमिमनिभ्यां खः ॥ ४४ ॥

आभ्यां खप्रत्ययो भवति । शङ्खः कम्बुः । मङ्खः मागधः ॥

मुहेर्मूर् च ॥ ४५ ॥

मुहेः खप्रत्ययो मूर्आदेशो भवति । मुह्यतीति मूर्खः अविद्वान् ॥

उषेः किल्लोपश्च ॥ ४६ ॥

उषेः खप्रत्ययः किद् भवति । अन्त्यस्य च लोपः । (उ ? ओ)षन्त्यस्यामिति उखा स्थाली ॥

महेरुच्चास्य वा ॥ ४७ ॥

महेः खप्रत्ययः कित्, अन्त्यलोपो, वा चाकारस्योकारादेशो भवति । महयतीति मुखम् आननम् । मखः यज्ञः ॥

श्यतेरिच्च वा ॥ ४८ ॥

श्यतेः खप्रत्ययः कित् इकारश्चान्तादेशो वा भवति । शिखा चूडा । विशिखा आपणः । विशिखः बाणः । शाखा विटपः । विशाखा नक्षत्रम् । विशाखः स्कन्दः ॥

---

१. 'काम्लात', २. 'षः । 'न म्ला', ३. 'त्यम्लात' ग. पाठः.

नियः ऊनक् च ॥ ४९ ॥

नयतेः खप्रत्यय ऊनक् चागमो भवति । न्यूंखः षडोङ्काराः ॥

पुवो नुं ह्रस्वश्च ॥ ५० ॥

पुवः खप्रत्ययो नुं ह्रस्वश्च भवति । पुङ्खः बाणब्रध्नभागो मङ्गलाचारश्च ॥

अश्नोतेर्डित् ॥ ५१ ॥

अश्नोतेः खप्रत्ययो डिद् भवति । अश्नुत इति खम् आकाशमिन्द्रियं च । नास्य खमस्तीति नखः । शोभनानि खान्यस्मिन् सुखम् । दुष्टानि खान्यस्मिन् दुःखम् ॥

मयेरूट् च ॥ ५२ ॥

मयतेः खप्रत्यय ऊट् चागमो भवति । मयूखः रश्मिः ॥

गृभृस्वृभ्यो गः ॥ ५३ ॥

एभ्यो गः प्रत्ययो भवति । गर्गः मुनिः । भर्गः रुद्रः । स्वर्गः नाकः । भृषतीति भर्गः, सुष्ठु अ(र्जे ? र्ज्य)त इति स्वर्गः इति व्युत्पत्तिस्तु संज्ञाशब्दानामनेकधात्वाख्यानं स्थापयति ॥

मुदिखडिच्छापूभ्यः कित् ॥ ५४ ॥

मुदिप्रभृतिभ्यो गप्रत्ययः किद् भवति । मुद्गः धान्यविशेषः । खड्गः करवाळः गण्डकश्च । छागः अजः । पूगः सङ्घः क्रमुकश्च ॥

गम्यदिभ्यां गन् ॥ ५५ ॥

आभ्यां गन्प्रत्ययो भवति । गङ्गा देवनदी । अद्गः समुद्रः ॥

भृशुभ्यां किन्नुं च ॥ ५६ ॥

आभ्यां गन्प्रत्ययः किन्नुं चागमो भवति । भृङ्गः भ्रमरः । 'शु गतौ' । शुङ्गः शुनकः ॥

शॄपीङ्भ्यां ह्रस्वश्च ॥ ५७ ॥

आभ्यां गन्प्रत्ययः किन्नुं चागमो ह्रस्वश्च भवति। शृङ्गं विषाणम्। पिङ्गः पीतवर्णः॥

तडेरागच्॥ ५८॥

तडेरागच्प्रत्ययो भवति। तडागं सरः॥

पतितमितॄल्भ्योऽङ्गच्॥ ५९॥

पत्यादिभ्योऽङ्गच्प्रत्ययो भवति। पतङ्गः पक्षी सूर्यश्च। तमङ्गः हर्म्यनिर्यूहः। तरङ्गः ऊर्मिः। लवङ्गः वृक्षजातिः॥

सृवृनॄभ्यो णित्॥ ६०॥

एभ्योऽङ्गच्प्रत्ययो णिद् भवति। सारङ्गः। वारङ्गः काण्डशल्यम्। नारङ्गः वृक्षः॥

कुरिविडिमृदिपिशिभ्यः कित्॥ ६१॥

कुर्यादिभ्योऽङ्गच्प्रत्ययः किद् भवति। कुरङ्गः हरिणः। विडङ्गः वृक्षजातिः। मृदङ्गः मुरजः। पिशङ्गः वर्णः॥

मनस्तुट् च॥ ६२॥

मनेरङ्गच्प्रत्ययः कित् तुट् चास्यागमो भवति। मतङ्गः मुनिः। यदपत्यानि मातङ्गाः हस्तिनः जनङ्गमाश्च॥

कलिस्फुलिभ्यामिङ्गक्॥ ६३॥

आभ्यामिङ्गक्प्रत्ययो भवति। कलिङ्गः राजा। कलिङ्गाः जनपदः। स्फुलिङ्गः स्फुलिङ्गा च ज्योतिःकणः॥

भृञो भुल् च॥ ६४॥

बिभर्तेरिङ्गक्प्रत्ययो भुल् चास्यादेशो भवति। भुलिङ्गः शकुनिः। भुलिङ्गा जनपदः॥

माङि तुलेरुङ्गच्॥ ६५॥

तुलयतेर्माङ्युपपदे उङ्गच्प्रत्ययो भवति। मातुलुङ्गः बीजपूरः॥

कमितमिशमिभ्यो डित्॥ ६६॥

एभ्य उङ्गच्प्रत्ययो डिद् भवति। कामयन्त इति कुङ्गा नाम जनपदः। ताम्यतीति तुङ्गः महावर्ष्मा। शाम्यतीति शुङ्गः मुनिः। तुङ्गा विनता। शुङ्गाः कन्दल्यः॥

सर्त्तेरुच्च॥ ६७॥

सर्त्तेरुङ्गच्प्रत्यय उकारश्चादेशो भवति। सुरुङ्गा गूढमार्गः॥

जनेर्घः॥ ६८॥

जनेर्घप्रत्ययो भवति। जङ्घा शरीरावयवः॥

हणातेः कित्॥ ६९॥

हणातेर्घप्रत्ययः किद् भवति। दीर्घ आयतः उच्चश्च॥

सर्त्तेरघच्॥ ७०॥

सर्त्तेरघच्प्रत्ययो भवति। सरघा मधुमक्षिका॥

कुवश्चट् दीर्घश्च॥ ७१॥

कौतेश्चट् दीर्घश्च भवति कूचः किलाटम्। कूची॥

सिवेष्टेरू च॥ ७२॥

सीव्यतेश्चट्प्रत्ययः अन्त्याजादेश्च ऊकारादेशो भवति। सूची॥

कृञश्च॥ ७३॥

कृञश्चट्प्रत्ययष्टेरू च भवति। कूर्चं श्मश्रु असनं च। कूर्चमिव कूर्चकः। कूर्चिकेति च भवति॥

उचेश्चक्[1]॥ ७४॥

उचेश्चक्प्रत्ययो भवति। उच्चः प्रांशुः॥

कवेरचक्॥ ७५॥

कवेरचक्[2]प्रत्ययो भवति। कवचः सन्नाहः।

क्रमेः क च॥ ७६॥

क्रमेरचक्[3]प्रत्ययः कश्चान्तादेशो भवति। क्रामतीति क्रकचः करपत्रः॥

---

१,२,३. 'च्' ग. पाठः.

मृङ इचच् ॥ ७७ ॥

मृङ इचच्प्रत्ययो भवति । म्रियतेऽनेन रसनेन्द्रियमिति मरिचम् ऊषणम् ॥

नमेर्डीचच् ॥ ७८ ॥

नमेर्डीचच्प्रत्ययो भवति । नीचः निम्नः ॥

लषेरुचच्[1] कश्च ॥ ७९ ॥

लषेरुचच्[2]प्रत्ययः कश्चान्तादेशो भवति । लष्यत इति लकुचः वृक्षजातिः ॥

गुडेरूचक् ॥ ८० ॥

गुडेरूचक्प्रत्ययो भवति । गुडूची छिन्नरुहा । गौरादित्वात् ङीष् ॥

चिम्योर्डोचच् ॥ ८१ ॥

चिम्योर्डोचच्प्रत्ययो भवति । चोचः वृक्षभेदः । मोचा कदली ॥

डञ्चच् ॥ ८२ ॥

चिम्योर्डञ्चच्प्रत्ययो भवति । चञ्चा तृणमयः पुरुषः । मञ्चः पर्यङ्कः अट्टश्च ॥

गुगम्यदितुदिमादिभ्यश्छक् ॥ ८३ ॥

गुप्रभृतिभ्यश्छक्प्रत्ययो भवति । गुच्छः स्तबकः । गच्छः क्षुद्रवृक्षः । अच्छः निर्मलः । तुच्छः स्तोकः । मच्छः मत्स्यः ॥

पूङ्पीङोर्ह्रस्वश्च ॥ ८४ ॥

आभ्यां छक्प्रत्ययो ह्रस्वश्च भवति । पुच्छं वालधिः । पिच्छं बर्हिः । पिच्छा पिच्छिलत्वम् ॥

कच्छगुलुञ्छपिलिपिञ्छादयः ॥ ८५ ॥

कच्छादयः शब्दाः छक्प्रत्ययान्ता निपात्यन्ते । कषेश्च च । कच्छः[3] नयवकुटारो देशश्च । गुदेरुनक् लश्च । गुलुञ्छः स्तबकः । पीलेरिपिनक् ह्रस्वश्च । पिलिपिञ्छः रक्षोविशेषः । आदिग्रहणात् पिञ्छादयो भवन्ति ॥

१. २., 'च्', ३. 'छः देशविशेषः ।' ग. पाठः.

वियो जक् ॥ ८६ ॥

वेतेर्जक्प्रत्ययो भवति । बीजमुत्पत्तिहेतुः ॥

पुवो नुग्घ्रस्वश्च ॥ ८७ ॥

पवतेः पुनातेर्वा जक्प्रत्ययो नुगागमो ह्रस्वश्च भवति । पुञ्जः राशिः ॥

कुवो वुक् च वा ॥ ८८ ॥

कवतेः कौतेर्वा[1] जक्प्रत्ययो वुगागमो नुगागमश्च वा भवति । कुब्जः वक्रानताङ्गः गच्छश्च । कुञ्जः हनुः पर्वतैकदेशश्च । निकुञ्जः गहनम् ॥

कुलेरिजक् ॥ ८९ ॥

कुलेरिजक्प्रत्ययो भवति । कुलिजं मानम् ॥

कृञोऽञ्जच् ॥ ९० ॥

करोतेरञ्जच्प्रत्ययो भवति । करञ्जः वृक्षजातिः ॥

मुर्वेरजग् लोपश्च ॥ ९१ ॥

मुर्वेरजक्प्रत्ययोऽन्त्यलोपश्च भवति । मुरजः मृदङ्गः ॥

कुटजोटजवलजबल्बजादयः ॥ ९२ ॥

कुटजादयः शब्दा अजक्प्रत्ययान्ता निपात्यन्ते । कुटेराद्युदात्तत्वं च । कुटजः वृक्षजातिः । वटेः सम्प्रसारणम् । उटजं मुनिकुटीरः । वलेर्वुक् च वा । वलजा सबुसो धान्यपुञ्जः । बल्बजः मुञ्जविशेषः । आदिग्रहणाद् भूर्जमरुजभेषजादयो भवन्ति ॥

झमेर्झः ॥ ९३ ॥

झमेर्झप्रत्ययो भवति । झञ्झा सशीकरो मेघवातः ॥

लुषेष्टः ॥ ९४ ॥

लुषेष्टप्रत्ययो भवति । लोष्टः मृत्पिण्डः ॥

---

1. 'कुवते' ग पाठः.

जूकिजनिपणिभ्यो दीर्घश्च ॥ ९५ ॥

जूप्रभृतिभ्यष्टप्रत्ययो दीर्घश्चैषां गुणापवादो भवति। जूटः मौलिः। कीटः क्षुद्रजन्तुः। जाण्टः पक्षिविशेषः। पाण्टश्च स एव ॥

घण्टाजटासटादयः ॥ ९६ ॥

घण्टादयः शब्दाष्टप्रत्ययान्ता निपात्यन्ते। अणेर्घद् च। अण(य?)तीति घण्टा वाद्यविशेषः। जनसनोर्लोपश्च। जटा ग्रथितः केशसङ्घातः। सटा अग्रथितः। आदिग्रहणाच्छटादयो भवन्ति। घटाघटादीनामग्रं वक्ष्यति ॥

कृसृभृवृकर्विशकिकङ्किकर्किमर्क्यवि भ्योऽटच् ॥ ९७ ॥

एभ्योऽटच्प्रत्ययो भवति। करटः काकः करिकपोलश्च। सरटः कृकलासः। भरटः प्लवविशेषः। वरटः क्षुद्रधान्यम्। कर्वटं क्षुद्रपत्तनम्। शकटम् अनः। कङ्कटः सन्नाहः। कङ्कटं सीमा। कर्कटः कपिलः कुलीरः। कर्कटी त्रपुसी। मर्कटः कपिः क्षुद्रजन्तुश्च। अवटः प्रपातश्च कूपश्च ॥

कीकटकपटकर्पटादयः ॥ ९८ ॥

कीकटादयः शब्दा अटच्प्रत्ययान्ता निपात्यन्ते। ककेरत ईच्च। कीकटः कृपणः। कम्पेर्नलोपश्च। कपटः माया। कृपेः प्रत्ययान्तोदात्तत्वं च। कर्पटं वस्त्रम्। आदिग्रहणात् पर्पटादयो भवन्ति ॥

किरतेराटग् लश्च वा ॥ ९९ ॥

किरतेराटक्प्रत्ययो लकारश्चान्तादेशो वा भवति। किराटो वणिक्। किलाटः भक्ष्यविशेषः ॥

शृङ्गाटकपाटललाटविराटप्रपुन्नाटादयः ॥ १०० ॥

शृङ्गाटादयः शब्दा आटक्प्रत्ययान्ता निपात्यन्ते। श्रयतेः सम्प्रसारणं नुं गद् च। शृङ्गाटः जलजविशेषः विपणिमार्गश्च। कवेः पश्च कपाटमरारिः। लतेर्द्वित्वं च। ललाटम् अलिकम्। वृञ इत्वं च। विराटः राजा। प्रपुणो नश्च। प्रपुन्नाटः एडगजः। आदिग्रहणात् शराटादयो भवन्ति ॥

---

१. 'घा', २. 'टः स्थलविशेषः। क', ३. 'ह' ग. पाठः.

चिरेरिटच् भुक् च ॥ १०१ ॥

चिरिणोतेरिटच्प्रत्ययो भुक् चागमो भवति । चिर्भिटी वालुकी ॥

डिण्डन् ॥ १०२ ॥

चिरिणोतेर्डिण्डन्प्रत्ययो भवति । चिरिण्डी अप्राप्तवयाः स्त्री ॥

कृतृकृपिभ्यः कीटन् ॥ १०३ ॥

एभ्यः कीटन्प्रत्ययो भवति । किरीटः कपर्दः । तिरीटः वेष्टनम् । कृपीटं हिरण्यम् ॥

खञ्जेररीटः ॥ १०४ ॥

खञ्जेररीटप्रत्ययो भवति । खञ्जरीटः खन्जनः ॥

वृणोतेरुटच् ॥ १०५ ॥

वृणोतेरुटच्प्रत्ययो भवति । वरुटः अन्त्यजातिः ॥

नर्कुटमुकुटकुक्कुटादयः ॥ १०६ ॥

नर्कुटादयः शब्दा उटच्प्रत्ययान्ता निपात्यन्ते । नृतेः कश्च । नृत्यतीति नर्कुटः वन्दी । मुचेरगुणत्वं च । मुकुटः किरीटः । कौतेर्डित् कुकुद् च । कुक्कुटः कृकवाकुः । आदिग्रहणात् स्थपुटादयो भवन्ति ॥

वन्[1]धेः कूटन् ॥ १०७ ॥

वन्धेः कूटन्प्रत्ययो भवति । वधूटी प्रथमवयाः स्त्री ॥

दु[2]रि द्रो दुर्[3]द् च ॥ १०८ ॥

दुर्युपपदे द्रणातेरुटच्प्रत्ययः दुर्द् चादेशो भवति । दुर्दुरुटो दुर्मुखः ॥

चपेरेटच् ॥ १०९ ॥

चपेरेटच्प्रत्ययो भवति । चपेटः चपेटा वा हस्ततलाहतिः ॥

ग्रो णित् ॥ ११० ॥

गिरतेरेटच्प्रत्ययो भवति । स च णित् । गारेटः मुनिः ॥

---

[illegible] ३. 'क' ख. पाठः.

करोतेरोटच् ॥ १११ ॥

करोतेरोटच्प्रत्ययो भवति । करोटं भाजनविशेषः ॥

बकोटाक्षोटकर्कोटादयः ॥ ११२ ॥

बकोटादयः शब्दा ओटच्प्रत्ययान्ता निपात्यन्ते । वचेः कंच् । बकः बकोटः । अश्यंत इत्यक्षोटः फलवृक्षः । कृञः (कु? क)क् च । कर्कोटः नागः । आदिग्रहणात् शाकोटादयो भवन्ति ॥

पीङ्कुणिकाणिभ्यष्ठक् ॥ ११३ ॥

पीङ्प्रभृतिभ्यष्ठक्प्रत्ययो भवति । पीठमासनम् । कुण्ठः अतीक्ष्णः । कण्ठः कन्धरा ॥

जॄकमिरमिभ्योऽठच् ॥ ११४ ॥

एभ्योऽठच्प्रत्ययो भवति । जरठः कठोरः । कमठः कच्छपः । रमठः देशः ॥

अमन्ताड्डः ॥ ११५ ॥

अमन्तात् डप्रत्ययो भवति । षण्डः वनम् । भण्डः वन्दी । खण्डं शकलम् । दण्डः प्रहरणम् । रण्डा विधवा । सण्डः उत्सृष्टः पशुः ॥

कृसृवृभृतॄभ्योऽण्डन् ॥ ११६ ॥

एभ्योऽण्डन्प्रत्ययो भवति । करण्डः समुद्रः । सरण्डः इषीका । वरण्डः कुड्यः । भरण्डः पक्षी । तरण्डः प्लवः ॥

आण्डैरण्डपिचण्डकाण्डभाण्डवतण्डपोगण्डादयः ॥ ११७ ॥

आण्डादयः शब्दा अण्डन्प्रत्ययान्ता निपात्यन्ते । अवेर्लोपो दीर्घश्च । आण्डः मुष्कः । ईरेर्गुणश्च । एरण्डः पञ्चाङ्गुलः । पिचेरगुणत्वं च । पिचण्डः लघुलगुडः । काभाभ्यामनिच्च । काण्डं पर्वं शरश्च । भाण्डं पण्यं पीवरश्च । वनस्त चं । वतण्डः मुनिः । पुवो गुक् च । पोगण्डः बालः । आदिग्रहणात् कूश्माण्ड गायण्डशयाण्डादयो भवन्ति ॥

---

१. 'कञ्च ।' ग. पाठः. २. 'श्नातेरश्नत्त'. ३. 'च' क. पाठः.

लगिगृभ्योरुडच् ॥ ११८ ॥

अनयोरुडच्प्रत्ययो भवति । लगुडः यष्टिः । गरुडः पक्षिराट् ॥

व्याडनीडक्रोडकहोडादयः ॥ ११९ ॥

व्याडादयः शब्दा उडच्प्रत्ययान्ता निपात्यन्ते । व्येञ्नीभ्यामुलोपश्च । व्याडः दुःशीलः । नीडः कुलायः । किरोरड् च । क्रोडः किरिः अङ्कश्च । कषेर्हश्च । कहोडः मुनिः । आदिग्रहणात् कुहडलहोडादयो भवन्ति ॥

शमिषणिकुणिभ्यो ढः ॥ १२० ॥

एभ्यो ढप्रत्ययो भवति । शण्ढः नपुंसकः । षण्ढः स एव । कुण्ढः धूर्त्तः ॥

नञि सहेः षश्चादेः ॥ १२१ ॥

नञ्युपपदे सहेर्ढप्रत्ययः आदेश्च षकारादेशो भवति । अषाढा नक्षत्रम् ॥

इणुर्वीशाद्रुवेणिभ्यो णः ॥ १२२ ॥

इणादिभ्यो णप्रत्ययो भवति । एणः मृगः । ऊर्णा अविलोम । शाणः परिमाणं शस्त्रतेजनं च । द्रोणः परिमाणम् । द्रोणी नौः । वेण्णा कृष्णवेण्णा नाम नदी ॥

वीणास्थूणाहूणभ्रूणक्षूणतूणतृणघृणादयः ॥ १२३ ॥

वीणादयः शब्दा णप्रत्ययान्ता निपात्यन्ते । वेतेर्गुणाभावश्च । वीणा वल्लकी । तिष्ठतेरू च । स्थूणा धारिणी । ह्वः सम्प्रसारणं च । हूणः म्लेच्छजातिः । भृज्ज ऊट् च । भ्रूणः निहीनः गर्भश्च । क्षुतुवोर्दीर्घश्च । क्षूणमपराधः । तूणः इषुधिः । त्रो ह्रस्वश्च । तृणं सस्यादिः । घरतेर्गुणाभावश्च । घृणा कृपा । आदिग्रहणाद् मसृणघुसृणादयो भवन्ति ॥

अङ्गितङ्गिकङ्गिमङ्गिकृपिवृषिभ्योऽणच् ॥ १२४ ॥

एभ्यो[3]ऽणच्[4]प्रत्ययो भवति । अङ्गणमजिरम् । तङ्गणं जनपदः । कङ्कणं प्रतिसरः । मङ्कणो मुनिः । कृपणः कीनाशः । वृषणः मुष्कः ॥

---

१. 'ड् च' क. पाठः. २. 'णायेद्राणाद', ३. 'अङ्गयादिभ्यो', ४. 'क्' ग. पाठः.

धृषेर्धिष च[1] ॥ १२५ ॥

धृषेरणच्प्रत्ययो धिष चादेशो भवति । धिषणा बुद्धिः ॥

कृकणकुङ्कणतृवणोल्बणोरणवंक्षणविचक्षणादयः ॥ १२६ ॥

कृकणादयः शब्दा अणच्प्रत्ययान्ता निपात्यन्ते । कृञः कुट् च । कृकणः मुनिः । कुकेः नुं च । कुङ्कणो जनपदः । तृपेर्वश्च । तृवणो देशः । वलेर्वस्य उत् बुक् च । उल्बणः स्फारः । अर्त्तेरुच्च । उरणो मेषः । वञ्चेः सुट् नकारलोपाभावश्च । वङ्क्षणः ऊरुमूलसन्धिः । विपूर्वाच्चक्षिङः ख्याञभावः । विचक्षणो विदग्धः । आदिग्रहणात् ज्योतिरिङ्गणतुरणभुरणादयो भवन्ति ॥

कृपिविषिभ्यामाणक् ॥ १२७ ॥

आभ्यामाणक्प्रत्ययो भवति । कृपाणः खड्गः । विषाणः शृङ्गं दन्तमुसलं च ॥

पाषाणपर्याणकल्याणादयः ॥ १२८ ॥

पाषाणादयः शब्दा आणक्प्रत्ययान्ता निपात्यन्ते । पिषेराच्चोपधायाः । पाषाणः ग्रावा । पराविणो लोपश्च । पर्याणमश्वादीनां पृष्ठच्छदः । कलेर्युट् च । कल्याणं श्वोवसीयम् । आदिग्रहणाद् द्रेक्काणवोक्काणकिङ्काणादयो भवन्ति ॥

गादाभ्यामेष्णक् ॥ १२९ ॥

आभ्यामेष्णक्प्रत्ययो भवति । रात्रिगेष्णः रङ्गो[2]पजीवी । सुगेष्णा किन्नरी । चारुदेष्णः सात्यभामेयः । सुदेष्णा विराटपत्नी ॥

हसिवसीण्जॄगम्मृवादम्यमिलूपूधूर्विभ्यस्तन् ॥ १३० ॥

ए[3]भ्यस्तन्प्रत्ययो भवति । हस्तः पाणिः । बस्तः छागः । एतः वर्णः । जर्त्तः[4] राजा । गर्त्तः अवटः । मर्त्तः मनुष्यः । वातः वायुः । दन्तः दशनः । अन्तः अवसानं समीपं च । लोतः मेषः । पोतः नौः बालश्च । धूर्त्तः कितवः ॥

---

१. 'च्', २. 'अ' क. पाठः. ३. 'हसादिभ्य'. ४. 'जू' ग. पाठः.

तनिमूङ्[1]भूहिभ्यः कित् ॥ १३१ ॥

एभ्यस्तन्प्रत्ययः किद् भवति । ततं विस्तीर्णं वाद्यभेदश्च । मूतः धान्यादिपुटः । भूतः ग्रहः । भूतं पृथिव्यादि । हितमुपकारि ॥

हुर्छेर्मुट् च ॥ १३२ ॥

हुर्छेस्तन्प्रत्ययो मुट् चास्यागमो भवति । मुहूर्त्तः कालविशेषः ॥

घृसिलूसूदूचितिभ्यः क्तः ॥ १३३ ॥

एभ्यः क्तप्रत्ययो भवति । घृतं सर्पिः । सितः वर्णः । लूता क्षुद्रजन्तुः । सूतः सारथिः । दूतः वचोहरः । चित्तं मनः ॥

तातव्रातालातसुतपुतपित्तनिमित्तमुस्तापुस्ततूस्तविस्तवितस्तादयः ॥ १३४ ॥

तातादयः शब्दाः क्तप्रत्ययान्ता निपात्यन्ते । तनिव्रजोरात्वं च । तातः पिता । व्रातः समूहः । लातेर्नञि । अलातमुल्मुकम् । सूङ्पूङोर्ह्रस्वश्च । सुतः पुत्रः । पुतः स्फिक् । पीङस्तुट् च ह्रस्वश्च । पित्तं मायुः । नौ मीङस्तद्वत् । निमित्तं हेतुः । मुषिपुषोः स च । मुस्ता कन्दविशेषः । पुस्तं लेप्य[3]म् । तुसेर्दीर्घश्च । तूस्तानि वस्त्रदशाः । विशेः स च । विस्तं मानम् । वौ तसेर्निच्च । वितस्ता नाम नदी । आदिग्रहणात् अयुतनियुतसुरतादयो भवन्ति ॥

भृदृशिवलियजादिभ्योऽतच् ॥ १३५ ॥

एभ्योऽतच्प्रत्ययो भवति । भरतो राजा । दर्शतः द्रष्टा । वलतः कुसूलः । यजतः यज्वा । आदिग्रहणात् कङ्कतविकङ्कतादयो भवन्ति ॥

पृषि[6]रञ्जिसिकिभ्यः कित् ॥ १३६ ॥

एभ्योऽतच्प्रत्ययः किद् भवति । पृषतः मृगः । रजतं भारम् । सिकताः वालुका ॥

---

१. 'धान्भ्य' क. ग. पाठः. २. 'घृप्रभृतिभ्यः' ग. पाठः. ३. 'ल्य', ४. 'सू', ५. 'भृप्रभृतिभ्यो' ग. पाठः. ६. 'षि' क. ग. पाठः.

कॄविलिभ्यामातच् ॥ १३७ ॥

आभ्यामातच्प्रत्ययो[1] भवति । किरातः शबरः । विलातो बालः ॥

जॄविशिवहिवसिभूजिरेवसाधिभासिगाडिमण्डिनन्दि-भ्योऽन्तच्[2] ॥ १३८ ॥

एभ्योऽन्तच्प्रत्ययो[3] भवति । जरन्तः महिषः । वेशन्तः पल्वलम् । वहन्तः रथः । वसन्तः ऋतुः । भवन्तः कालः । जयन्तः इन्द्रपुत्रः । रेवन्तः सूर्यपुत्रः । साधयन्तः भिक्षुः । भासयन्तः सूर्यः । गडयन्तः मेघः । मण्डयन्तः प्रसाधकः । नन्दयन्तः सुखकृत् ॥

हिदुषोर्मुक्षुकौ च ॥ १३९ ॥

आभ्यामन्तच्प्रत्ययो यथासङ्ख्यं चानयोर्मुक् षुक् चागमो भवति । हेमन्तः ऋतुः । दुष्षन्तः राजा ॥

रुहिजीविभ्यां षित् ॥ १४० ॥

आभ्यामन्तच्प्रत्ययः षिद् भवति । रोहन्तस्तरुः । रोहन्ती ओषधिः । जीवन्तः ऋषिः । जीवन्ती शाकः ॥

पलिरुहिश्याहृभ्य इतन् ॥ १४१ ॥

एभ्य इतन्प्रत्ययो भवति । पलितं श्वेतकेशः । रोहितः वर्णः मत्स्यश्च । लत्वेन लोहितो वर्णः । लोहितमसृक् । श्येतः शुक्लः[5] । हरितः वर्णः[6] ॥

नञ्यापेः ॥ १४२ ॥

नञ्युपपद आपेर्धातोरितच्प्रत्ययो भवति । नापितः कारुविशेषः ॥

उचिकुसिपिशिपृषिभ्यः कित् ॥ १४३ ॥

एभ्य इतच्प्रत्ययः किद् भवति । उचितः अनुरूपः । कुसितः मुनिः । पिशितं मांसम् । पृषितं वारिबिन्दुः ॥

हृञ ईतञ् ॥ १४४ ॥

---

१. 'यः किद् भ', २. 'ण्डिभ्यो', ३. 'जॄप्रभृतिभ्यो' ग. पाठः. ४. 'बु' क. पाठः. ५. 'तम', ६. 'वर्णः । हृ' ग. पाठः.

हृञ ईतन्प्रत्ययो भवति । हारीतः पक्षी मुनिश्च ॥

अदि भुवो डुतच् ॥ १४५ ॥

भवतेरद्युपपदे डुतच्प्रत्ययो भवति। अद्भुतमाश्चर्यम् ॥

शकेरुन्तः ॥ १४६ ॥

शकेरुन्तप्रत्ययो भवति। शकुन्तः पक्षी ॥

कषेर्डित् ॥ १४७ ॥

कषेरुन्तप्रत्ययो डिद् भवति। कुन्तः आयुधम् ॥

कुलिमयिभ्यामूतक् ॥ १४८ ॥

आभ्यामूतक्प्रत्ययो भवति। कुलूतो जनपदः। मयूतं[1] वसतिः ॥

कम्पेरोतो नलोपश्च ॥ १४९ ॥

कम्पेरोतप्रत्ययो नलोपश्च भवति। कपोतः पक्षी ॥

आङि स्फायेर्डित् ॥ १५० ॥

स्फायेराङ्युपपद ओतप्रत्ययो डिद् भवति। आस्फोता नाम ओषधिः ॥

नीरमिकुषिकाशिभ्यः क्थन् ॥ १५१ ॥

एभ्यः क्थन्प्रत्ययो भवति। सुनीथः मतिमान्। रथः स्यन्दनः। कुष्ठं व्याधिः गन्धद्रव्यं च। काष्ठं दारु ॥

अवे भृञः ॥ १५२ ॥

बिभर्तेरवे उपपदे क्थन्प्रत्ययो भवति। अवभृथः यज्ञावसानम् ॥

उषिकुषिकमिगार्तिभ्यस्थन् ॥ १५३ ॥

उष्यादिभ्यः थन्प्रत्ययो भवति। ओष्ठः अधरः। कोष्ठः कुसूलः उदरं च। कन्था आवरणं नगरं च। गाथा श्लोकः। अर्थः अभिधेयादिः ॥

---

१. ता'. २. 'नी' ग. पाठः.

सर्त्तेर्णित् ॥ १५४ ॥

सर्त्तेः थन्प्रत्ययो णिद् भवति । सार्थः समूहः ॥

पातॄतुदिवचिरिचिसिचिविशिभ्यस्थक् ॥ १५५ ॥

पिबत्यादिभ्यः थक्प्रत्ययो भवति । पीथः पानम् । तीर्थं जलावतारः । तुत्थं द्रव्यविशेषः । उक्थं सामविशेषः । रिक्थं द्रव्यम् । सिक्थं पुलाकः । विष्ठा पुरीषम् ॥

संनिन्र्युद्भ्योष्विणर्तिशीङ्गापाभ्यः ॥ १५६ ॥

समादिषूपपदेष्विणादिभ्यस्थक्प्रत्ययो भवति । समिथः सङ्गमः । निर्ऋथः निकायः । निशीथः अर्धरात्रः । उद्गीथः प्रथमोच्चारणम् । गोपीथः जलद्रोणी[1] ॥

गूथयूथप्रोथपृष्ठादयः ॥ १५७ ॥

गूथादयः शब्दाः थक्प्रत्ययान्ता निपात्यन्ते । गुयुवोर्दीर्घश्च । गूथं पुरीषम् । यूथं समूहः । प्रवतेर्गुणश्च । प्रोथः अश्वादिमुखाग्रभागः । स्पृशेः सलोपश्च । पृष्ठं शरीरावयवः । आदिग्रहणात् अथावगाथप्रगाथादयो भवन्ति ॥

शीङ्शपिशमिगमिवन्दिबन्धिजीविप्राण्युपसृष्टवसिभ्योऽथः ॥ १५८ ॥

शीङादिभ्योऽथप्रत्ययो भवति । शयथः वराहः । शपथः प्रत्ययकरणम् । शमथः समाधिः । गमथः पन्थाः । वन्दथः स्तोता । बन्धथः कोकिलः । जीवथः वायुर्धार्मिकश्च । प्राणथः बलवान् । उपसृष्टाद्वसेः आवसथः गृहम् । उपवसथः सुत्याहात् पूर्वमहः ॥

भृञश्चित् ॥ १५९ ॥

भृञोऽथप्रत्ययश्चिद् भवति । भरथः लोकपालः ॥

विदः कित् ॥ १६० ॥

---

१. 'ह' ग. पाठ.

विदोऽथप्रत्ययः किद् भवति। विदथः यज्ञः संग्रामश्च ॥

रुवो वा ॥ १६१ ॥

रुवोऽथप्रत्ययः किद्वा भवति। रवथः शब्दकारः। रुवथः शिशुः ॥

जॄवृभ्यामूथन् ॥ १६२ ॥

आभ्यामूथन्प्रत्ययो भवति। जरूथः कलुषम्। वरूथः सेनाङ्गम् ॥

शपेर्दन् ॥ १६३ ॥

शपेर्दन्प्रत्ययो भवति। शब्दः ध्वनिः ॥

आपो ह्रस्वश्च ॥ १६४ ॥

आपो दन्प्रत्ययो ह्रस्वश्च भवति। अब्दः वत्सरः ॥

गुवः कित् ॥ १६५ ॥

गुवो दन्प्रत्ययः किद् भवति। गुदमपानम् ॥

वृतुसुकुभ्यो नुं च ॥ १६६ ॥

एभ्यो दन्प्रत्ययः किद् नुमागमश्च भवति। वृन्दं समूहः। तुन्दम् उदरम्। सुन्दः दानवः। कुन्दः पुष्पजातिः ॥

ककिमकिभ्यामन्दन् ॥ १६७ ॥

आभ्यामन्दन्प्रत्ययो भवति। ककन्दः राजा। येन निर्वृत्ता काकन्दी नगरी। मकन्दः, येन निर्वृत्ता माकन्दी नगरी ॥

अलिपुलिकलिभ्यः किन्दन् ॥ १६८ ॥

एभ्यः किन्दन्प्रत्ययो भवति। अलिन्दः प्रघाणः। पुलिन्दः शबरः। कलिन्दः पर्वतः ॥

मुचेर्डुकुन्दकुकुन्दौ ॥ १६९ ॥

मुचेर्डुकुन्दकुकुन्दौ प्रत्ययौ भवतः। मुकुन्दः विष्णुः। मुचुकुन्दः राजा वृक्षविशेषश्च ॥

यमेरुन्दन् ॥ १७० ॥

यमेरुन्दन्प्रत्ययो भवति । यमुन्दः क्षत्रियविशेषः ॥

ककेरुदण्णिच्च वा ॥ १७१ ॥

ककेरुदन्प्रत्ययो णित्त्वं चास्य वा भवति । ककुदं स्कन्धः । काकुदं तालु ॥

अर्त्तिबुदोर्बुक् च ॥ १७२ ॥

आभ्यामुदन्प्रत्ययो बुक् चागमो भवति । अर्बुदः पर्वतः । बुद्बुदः जलस्फोटः ॥

स्कन्धमिभ्यां धः ॥ १७३ ॥

आभ्यां धप्रत्ययो भवति । स्कन्धः बाहुमूर्धा (कारुदं ?) विभागश्च । अन्धः दृष्टिविकलः ॥

कुङोऽन्धच् ॥ १७४ ॥

कवतेरन्धच्प्रत्ययो भवति । कवन्धः छिन्नमूर्धा देहः ॥

नौ स्यतेरधक् ॥ १७५ ॥

नावुपपदे स्यतेरधक्प्रत्ययो भवति । निषधो[1] जनपदः ॥

मङ्गेर्नलोपश्च ॥ १७६ ॥

मङ्गेरधक्प्रत्ययो नलोपश्च भवति । मगधो[2] जनपदः ॥

इषेरुधक् ॥ १७७ ॥

इषेरुधक्प्रत्ययो भवति । इषुधः याच्ञा ॥

धापॄ[3]वस्यज्यतिसिविभ्यो नः ॥ १७८ ॥

एभ्यो नप्रत्ययो भवति । धानाः भक्ष्यविशेषः । पर्णं पलाशं वाहनं च । वस्नः वासमूल्यम् । वेनः राजा । अत्नः वायुः । स्योनं सुखम् ॥

---

१, २. 'धा' क. पाठः. ३. 'पॄ' ग. पाठः.

उषिशुषिकृषीण्जिमीङ्बुधिभ्यः कित् ॥ १७९ ॥

एभ्यो नप्रत्ययः किद् भवति । उष्णं घर्मः । शुष्णः दानवः । कृष्णः वर्णः विष्णुश्च । इनः स्वामी सूर्यश्च । जिनः अर्हन् बुद्धश्च । मीनः मत्स्यः । बुध्नः मूलम् ॥

वृधेरं च ॥ १८० ॥

वृधेर्नप्रत्ययः अं चागमो भवति । ब्रध्नः सूर्यः ॥

सुवो दीर्घश्च ॥ १८१ ॥

सुवतेर्नप्रत्ययो दीर्घश्च भवति । सूना वध्यस्थानम् ॥

कृवृतॄस्यनिभ्यो नित् ॥ १८२ ॥

एभ्यो नप्रत्ययो निद् भवति । कर्णः श्रवणम् । वर्णः शुक्लादिः ब्राह्मणादिः अकारादिश्च । तर्णः वत्सः । सेना चमूः । अन्नमन्धः ॥

रमेस्त च ॥ १८३ ॥

रमेर्नप्रत्ययस्तश्चान्तादेशो भवति । रत्नं मुक्तादि ॥

रास्नासास्नासुम्नद्युम्ननिम्नशिश्नकृत्स्नाक्ष्णश्लक्ष्णाभीक्ष्णतीक्ष्णस्तेनफेनश्येनच्यौक्नादयः ॥ १८४ ॥

रास्नादयः शब्दा नप्रत्ययान्ता निपात्यन्ते । रासाभ्यां सुट् च । रास्ना ओषधिः । सास्ना गवां गलचर्म । सुद्युनिषु माङो डिच्च । सुम्नं सुखम् । द्युम्नं द्रविणम् । निम्नं नतम् । शीङः शुग्घ्रस्वश्च । शिश्नः शेफः । कृतेः सक् च । कृत्स्नं सकलम् । अशेः सुट् च । अक्ष्णम् अखण्डम् । श्लिषेरत्वोपधायाः । श्लक्ष्णमकर्कशं सूक्ष्मं च । अभाविषेः किच्च । अभीक्ष्णमजस्रम् । तिजेः सुट् दीर्घश्च । तीक्ष्णं शिताग्रं कटुकं च । स्त्यायतेः स्ति च । स्तेनः चोरः । स्फायेः फि च । फेनः डिण्डीरः । श्यायेरि च । श्येनः पक्षी । च्युङः कुट् वृद्धिश्च । च्यौक्नी कांस्यादिपात्री । आदिग्रहणात् नूलपुराणराण्डादयो भवन्ति ॥

१. 'स्ना', २. 'क्ष्णं ख', ३. 'तु' ग. पाठः. ४. 'दूनदुकोणरेण्वाद' क. पाठः.

श्रुयुरुवृज्यसिरसिरुचिरुहिभ्यो युच् ॥ १८५ ॥

एभ्यो युच्प्रत्ययो भवति । श्रवणं कर्णः । यवनाः जनपदः । रवणः करभः । वरणः वृक्षः । जयनम् ऊर्णापटः । असनः बीजकः । रसना जिह्वा । रोचना गोपित्तम् । रोहणः गिरिः ॥

अशो रश च ॥ १८६ ॥

अश्नोतेर्युच्प्रत्ययो रश चादेशो भवति । रशना मेखला ॥

उन्देर्नलोपश्च ॥ १८७ ॥

उन्देर्युच्प्रत्ययो नलोपश्च भवति । ओदनः भक्तम् ॥

रञ्जेर्युन् ॥ १८८ ॥

रञ्जेर्युन्प्रत्ययो नलोपश्च भवति । रजनी हरिद्रा । महारजनं कुसुम्भम् ॥

भुवः किद्वा ॥ १८९ ॥

भुवो युन्प्रत्ययः किद्वा भवति । भवनं गृहम् । भुवनं जगत् ॥

कॄपवृजिनिधाञ्भ्यः क्युः ॥ १९० ॥

एभ्यः क्युप्रत्ययो भवति । किरणः रश्मिः । पूरणः समग्रयिता । वृजनः विवेक्ता । निधनम् अवसानम् ॥

हनो जघ च ॥ १९१ ॥

हन्तेः क्युप्रत्ययो जघ चादेशो भवति । जघनं श्रोणिः ॥

मन्मनगहनगृञ्जनादयः ॥ १९२ ॥

मन्मनादयः शब्दाः क्युप्रत्ययान्ता निपात्यन्ते । मनेर्मुट् च । मन्मनः वाग्विकलताविशेषः । गाहो ह्रस्वश्च । गहनं कृच्छ्रावगाहनीयं कष्टं च । गृजेर्नुं च । गृञ्जनमभक्ष्यद्रव्यविशेषः । आदिग्रहणात् काञ्चनाननकाननादयो भवन्ति ॥

हृञविभ्यामिनच् ॥ १९३ ॥

आभ्यामिनच्प्रत्ययो भवति । हरिणः मृगः । अविनं जलम् ॥

वृजिनाजिनकठिनादयः ॥ १९४ ॥

वृजिनादयः शब्दा इनच्प्रत्ययान्ता निपात्यन्ते । वृजेरुपधत्वं च । वृजिनं पापम् । अजेर्वीभावाभावश्च । अजिनं चर्म । [illegible] । कठिनमकोमलम् । आदिग्रहणाद् द्रुहिणादयो भवन्ति ॥

द्रुदक्षिभ्यामिनन् ॥ १९५ ॥

आभ्यामिननप्रत्ययो भवति । द्रविणं द्रव्यम् । दक्षिणः अनुकूलः । दक्षिणा दिक् ब्रह्मदेयं च ॥

विपिनेरिणतुहिनमहिनादयः ॥ १९६ ॥

विपिनादयः शब्दा इनन्प्रत्ययान्ता निपात्यन्ते । वपेरिच्चोपधायाः । विपिनं वनम् । ईरेर्ह्रस्वश्च । इरिणमूषरम् । तुहेर्गुणाभावश्च । तुहिनं हिमम् । महेर्मध्योदात्तत्वं च । महिनः माहात्म्यवान् । आदिग्रहणाद् रोहिणादयो भवन्ति ॥

खलेरीनच् ॥ १९७ ॥

खलेरीनच्प्रत्ययो भवति । खलीनं कवियम् ॥

पठेर्णित् ॥ १९८ ॥

पठेरीनच्प्रत्ययो णिद् भवति । पाठीनो मत्स्यः ॥

अर्त्त्यर्जिकॄवॄतॄधॄदारियमिभ्य उनन् ॥ १९९ ॥

एभ्य उननप्रत्ययो भवति । अरुणः सूर्यः सारथिः वर्णश्च । वयुनं विज्ञानम् । करुणः रसः । करुणा दया । वरुणः प्रचेताः । तरुणो युवा । धरुणः धर्त्ता । दारुणः उग्रः । यमुना नदी ॥

लषेः श च ॥ २०० ॥

लषेरुननप्रत्ययः शकारश्चान्तादेशो भवति । लशुनं रसोनम् ॥

पिशिमिथिभ्यां कित् ॥ २०१ ॥

आभ्यामुननप्रत्ययः किद् भवति । पिशुनः खलः । मिथुनं द्वन्द्वम् ॥

फलेर्गुक् च ॥ २०२ ॥

फलेरुनन्प्रत्ययो गुक् चागमो भवति । फल्गुनी नक्षत्रम् ॥

अर्जेस्तृणे चित् ॥ २०३ ॥

अर्जेरुनन्प्रत्ययस्तृणे चित्, अन्यत्र निद् भवति । अर्जुनं तृणम् । अर्जुनः पार्थः । अर्जुनी गौः । अर्जुनो वर्णः ॥

शकेरुनः ॥ २०४ ॥

शकेरुनप्रत्ययो भवति । शकुनः पक्षी ॥

वीपतिभ्यां तनन् ॥ २०५ ॥

आभ्यां तनन्प्रत्ययो भवति । वेतनं भृतिः । पत्तनं नगरम् ॥

पूपूभ्यां कित् ॥ २०६ ॥

आभ्यां तनन्प्रत्ययः किद् भवति । पृतना सेना । पूतना राक्षसी ॥

अलितलिशीङ्पृपाभ्यः पः ॥ २०७ ॥

अल्यादिभ्यः पप्रत्ययो भवति । अल्पं स्तोकम् । तल्पं शयनम् । शेपः पुच्छः । पर्पः प्लवः । पापं कल्मषम् ॥

कृशकुसुस्तुयुरूणां पन्नू च ॥ २०८ ॥[1]

कृप्रभृतिभ्यः पन्प्रत्ययः ऊकारश्चैषामन्तादेशो भवति । कूर्पं भ्रूमध्यम् । शूर्पं परिपवनम् । कूपः प्रहिः । सूपः व्यञ्जनम् । स्तूपः निचयः । यूपः यज्ञाङ्गम् । रूपं चक्षुर्विषयः ॥

बाष्पशष्पनिवेष्पशिल्पक्षुपनीपचम्पाशम्पादयः ॥ २०९ ॥

बाष्पादयः शब्दाः पन्प्रत्ययान्ता निपात्यन्ते । वातेः बुट् च । बाष्पः अश्रु । शदेः षट् च । शष्पं बालतृणम् । नौ विशेश्च तद्वत् । निवेष्पः अपां गर्भः । शलेः शिल च । शिल्पं विज्ञानम् । क्षुनियोर्गुणाभावश्च । क्षुपो गुच्छः । नीपः वृक्षविशेषः । चमिशमोर्निच्च । चम्पा नगरी । शम्पा विद्युत् काञ्ची च । आदिग्रहणात् पम्पावेपादयो भवन्ति ॥

---

१. 'ग' क. पाठः.

उषिकुषिकुटिदलिकलिखजिभ्यः कपन् ॥ २१० ॥

एभ्यः कपन्प्रत्ययो भवति । उषपः सूर्यः । कुषपो विन्ध्यः । कुटपः प्रस्थचतुर्भागः । दलपः विदलं प्रहरणं च । कलपः शाकपर्णम् । खजपः घृतमन्थः ॥

सर्त्तेरपः षुक् च ॥ २११ ॥

सर्त्तेरपप्रत्ययः षुक् चास्यागमो भवति । सर्षपः सिद्धार्थः ॥

विटपविष्टपोलपकुणपकुतपचातपशिंशपादयः॥२१२॥

विटपादयः शब्दा अपप्रत्ययान्ता निपात्यन्ते । विटेर्गुणाभावश्च । विटपः शाखा । विशेस्तुट् च । विष्टपं जगत् । वलेरुल च । उलपस्तृणविशेषः । कुणेरगुणत्वम् । कुणपं मृतकम् । कौतेस्तुट् च । कुतपः छागलोमकम्बलः श्राद्धकालश्च । चायेस्तुट् च । चातपो मुनिः । शंसेश्शोऽत इत्व । शिंशपा वृक्षविशेषः । आदिग्रहणात् खरपादयो भवन्ति ॥

विशेरिपक् ॥ २१३ ॥

विशेरिपक्प्रत्ययो भवति । विशिपं वेश्म आसनं पद्मं च ॥

दलेरीपक् दिल च ॥ २१४ ॥

दलेरीपक्प्रत्ययो दिलादेशश्च भवति । दिलीपः राजा ॥

अडेरुपक् उच्चोपधायाः ॥ २१५ ॥

अडेरुपक्प्रत्यय उपधायाश्चोकारादेशो भवति । उडुपं प्लवः ॥

अशेरूपक् पश्च ॥ २१६ ॥

अशेरूपक्प्रत्ययः पश्चान्तादेशो भवति । अपूपः पक्वान्नविशेषः ॥

गुरेः[1] फग् लश्च ॥ २१७ ॥

गुरेः[2] फक्प्रत्ययो लश्चान्तादेशो भवति । गुल्फः जङ्घाङ्घ्रिसन्धिः[3] ॥

---

१, २. 'दे:' ग. पाठः. ३. 'स्थि' क. पाठः.

शिफाशफकफादयः ॥ २१८ ॥

शिफादयः शब्दाः फक्प्रत्ययान्ता निपात्यन्ते । श्यतेरित्वं च । शिफा वृक्षजटा ह्रस्वश्च । शफः खुरः । कायतेश्च[1] । कफः श्लेष्मा । आदिग्रहणात् रिफानफासुनफादयो भवन्ति ॥

नितमिशमिभ्यां बः ॥ २१९ ॥

निपूर्वात् तमेः शमेश्च बप्रत्ययो भवति । नितम्बः श्रोणीवंशः । शम्बः वज्रः वर्षणविशेषश्च ॥

अमेर्णिद्वा ॥ २२० ॥

अमेर्वप्रत्ययो णिद्वा भवति । अम्बा माता । आम्बोऽपह्नवः ॥

अलिशलोरत उच्च ॥ २२१ ॥

आभ्यां वप्रत्ययः अकारस्य चोकारादेशो भवति । उल्बं गर्भवेष्टनम् । शुल्बं ताम्रम् ॥

निम्बबिम्बडिम्बहिडिम्बस्तम्बसाम्बादयः ॥ २२२ ॥

निम्बादयः शब्दा बप्रत्ययान्ता निपात्यन्ते । निये[2] इत् नुं च । निम्बः वृक्षविशेषः । बन्धेर्धलोपः इदतः । बिम्बं प्रतिच्छन्दकः । डीङो नुं ह्रस्वः हिट् च वा । डिम्बः व्यसनम् । हिडिम्बः राक्षसः । हिडिम्बा । स्तम्बेर्वेलोपश्च[3] । स्तम्बः सोटः । स्यतेर्नुं च साम्बः जाम्बवतेयः । आदिग्रहणात् कुशाम्बादयो भवन्ति ॥

करकटिकडिभ्योऽम्बच् ॥ २२३ ॥

एभ्योऽम्बच्प्रत्ययो भवति । करम्बः दध्योदनः । कटम्बः पक्वान्नविशेषः । कडम्बो जातिभेदः ॥

कदेर्णित् पक्षिणि ॥ २२४ ॥

कदेरम्बच्प्रत्ययः पक्षिणि विषये णित् अन्यत्राणिद् भवति । कादम्बः हंसः । कदम्बो वृक्षः ॥

---

१. 'श्च फः । क' क. पाठः. २. 'यो नुं ह्रस्वश्च । नि' ग. पाठः. ३. 'बेर्लोप' क. पाठः.

निकुरिकुटिभ्यामुम्बक् ॥ २२५ ॥

आभ्यामुम्बक्प्रत्ययो भवति । निकुरुम्बं समूहः । कुटुम्बं दारादयः ॥

दॄदलिभ्यां भः ॥ २२६ ॥

आभ्यां भप्रत्ययो भवति । दर्भः कुशः । दल्भः ऋषिः ॥

गिरो भन् ॥ २२७ ॥

गिरतेर्भन्प्रत्ययो भवति । गर्भः प्रसवः ॥

इणः कित् ॥ २२८ ॥

इणो भन्प्रत्ययः किद् भवति । इभः हस्ती ॥

कृशॄवलिवल्लिरासिगर्दिभ्योऽभच् ॥ २२९ ॥[1]

एभ्योऽभच्प्रत्ययो भवति । करभः उष्ट्रः । शरभः श्वापदविशेषः । वलभी वेश्माग्रभूमिका । वल्लभः अभीष्टः । रासभः खरः । गर्दभः स एव ॥

सनेर्डित् ॥ २३० ॥

सनेरभच्प्रत्ययो डिद् भवति । सभा परिषत् शाला च ॥

ऋषिवृषिभ्यां कित् ॥ २३१ ॥

आभ्यामभच्प्रत्ययः किद् भवति । ऋषभः पुङ्गवः । वृषभः स एव ॥

कृञोऽम्भच् ॥ २३२ ॥

कृञोऽम्भच्प्रत्ययो भवति । करम्भाः दधिसक्तवः ॥

सेरिभज् रुट् च ॥ २३३ ॥

सिनोतेरिभच्प्रत्ययः रुट् चास्यागमो भवति । सेरिभः महिषः ॥

टिकेष्टस्तुट् च ॥ २३४ ॥

टिकेरिभच्प्रत्ययष्टकारोऽन्तादेशस्तुडागमश्च भवति । टिट्टिभः पक्षी ॥

ककेरुभः ॥ २३५ ॥

ककेरुभप्रत्ययो भवति । ककुभोऽर्जुनः ॥

---

१. 'दॄ' ग. पाठः.

कुकेः कुक् च ॥ २३६ ॥

कुकेरुभप्रत्ययः कुक् चागमो भवति । कुक्कुभः पक्षिविशेषः ॥

दमेर्दो डु डुक् च ॥ २३७ ॥

दमेरुभप्रत्ययो दकारस्य डुकारादेशो डुक् चागमो भवति । डुण्डुभः निर्विषाहिः ॥

क उम्भक् ॥ २३८ ॥

कायतेरुम्भक्प्रत्ययो भवति । कुम्भः घटः ॥

कसेरुच्चातः ॥ २३९ ॥

कसेरुम्भक्प्रत्ययः अकारस्य चोकारादेशो भवति । कुसुम्भं महारजनम् ॥

अर्त्तीरिस्तुसुहुधृक्षियक्षिव्याभायापदिशॄनीभ्यो मन् ॥ २४० ॥

एभ्यो मन्प्रत्ययो भवति । अर्मः अक्षिरोगः । ईर्मः व्रणम् । स्तोमः समूहः । सोमश्चन्द्रमाः । होमः आहुतिः । धर्मः सत्कर्म । क्षेमं कल्याणम् । यक्ष्मा व्याधिः । व्यामः वक्षोभुजायतिः । भामः क्रोधः । यामः प्रहरः । पद्मं कमलम् । शर्मो नदः कालश्च । नेमः अर्धम् ॥

ग्रसेरा च ॥ २४१ ॥

ग्रसेर्मन्प्रत्यय आकारश्चान्तादेशो भवति । ग्रामः समूहादिः ॥

स्यविसिविशुषिक्षुभ्यः कित् ॥ २४२ ॥

सिनोत्यादिभ्यो मन्प्रत्ययः किद् भवति । सिमः सर्वनाम । ऊमः जनः । स्यूमः[1] स्यूततन्तुः[2] । शुष्मं बलम् । क्षुमा अतसी ॥

गुलिबिलिमिलिसिधीन्धीधूञ्ग्याहिरुभ्यो मक् ॥ २४३ ॥

गुलिप्रभृतिभ्यो मक्प्रत्ययो भवति । गुल्मः सेनाङ्गं तरुसमूहो व्याधिश्च । बिल्मं प्रकाशः । भिल्मं भास्वरम् । सिध्मं त्वग्रोगः ।

१. 'स्यु', २. 'सूत्रत' क. पाठः.

इध्ममिन्धनम् । धूमः अग्निकेतुः । श्यामः वर्णः । हिमं तुहिनम् । रुमा लवणभूमिः ॥

तिजियुजिरुचां कु च ॥ २४४ ॥

तिजिप्रभृतिभ्यो मक्प्रत्ययोऽन्त्यस्य च कवर्गादेशो भवति । तिग्मं तीक्ष्णम् । युग्मं युगलम् । रुक्मं सुवर्णम् ॥

अवेर्हूस्वश्च ॥ २४५ ॥

अवेर्मक्प्रत्ययः ऊठो ह्रस्वश्च भवति । उमा गौरी अवशा कीर्त्तिश्च ॥

भियः षुग् वा ॥ २४६ ॥

भियो मक्प्रत्ययः षुगागमश्च वा भवति । बिभ्यत्यस्मादिति भीष्मः भयानकः । भीमः स एव ॥

ग्रीष्मघर्मकूर्मसूर्मसुह्मजिह्मजाल्मादयः ॥ २४७ ॥

ग्रीष्मादयः शब्दा मक्प्रत्ययान्ता निपात्यन्ते । ग्रसेरीत्वातः षत्वं च । ग्रीष्मः ऋतुः । घरतेर्गुणश्च । घर्मः निदाघः । करोतेरुद् दीर्घश्च । कूर्मः कच्छपः । सूरेर्णित्त्व । सूर्मा चुल्लिः लोहप्रतिमा च । सहेरत उत्त्व । सुह्मा जनपदः । जहातेर्जिह च । जिह्मः जडः । जलेर्णित्त्व । जाल्मः असमीक्ष्य-कारी । आदिग्रहणात् अह्मात्मसूक्ष्मादयो भवन्ति ॥

प्रथिचरिकलिकर्दिपृसृभ्योऽमच् ॥ २४८ ॥

एभ्योऽमच्प्रत्ययो भवति । प्रथमः अग्रिमः । चरमः पश्चिमः । कलमः शालिः । कर्दमः पङ्कः । परम उत्कृष्टः । सरमा देवशुनी ॥

अवेर्धश्च वा ॥ २४९ ॥

अवेरमच्प्रत्ययो धश्चान्तादेशो वा भवति । अधमः हीनः । अवमः स एव ॥

दाणो डिमच् ॥ २५० ॥

दाणो डिमच्प्रत्ययो भवति । दाडिमः दाडिमी वा वृक्षजातिः ॥

डिमेः कित् ॥ २५१ ॥

---

१. 'गवी ॥' ग. पाठः.

डिमेर्डिमच्प्रत्ययः किद् भवति । डिण्डिमः वाद्यविशेषः ॥

कुथेरुमक् ॥ २५२ ॥

कुथेरुमक्प्रत्ययो भवति । कुथुमं मृगाजिनम् ॥

कसेरुच्चातः ॥ २५३ ॥

कसेरुमक्प्रत्ययः अकारस्य चोकारादेशो भवति । कुसुमं पुष्पम् ॥

कुदकुकोर्नु च ॥ २५४ ॥

आभ्यामुमक्प्रत्ययो नुं चागमो भवति । कुन्दुमः निचयः । कुङ्कुमः घुसृणः ॥

गुधेरूमः ॥ २५५ ॥

गुधेरूमप्रत्ययो भवति । गोधूमो धान्यविशेषः ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य
वृत्तौ हृदयहारिण्यां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

---

## अथ तृतीयः पादः ।

माच्छासाशलिकलिपलिससिसूकनिमनिबन्धिभ्यो यः ॥ १ ॥

माप्रभृतिभ्यो यप्रत्ययो भवति । माया छद्म । छाया तमः कान्तिश्च । सायं दिनावसानम् । शल्यमन्तर्गतं लोहादि । कल्यः नीरोगः । पल्यैः कटकुसूलः समर्थश्च । सस्यं क्षेत्रस्थो गोधूमादिः । सव्यः वामः दक्षिणश्च । कन्या कुमारी । मन्या धमनिः । वन्ध्या अप्रसूतिः ॥

सञ्जेर्धश्च ॥ २ ॥

सञ्जेर्यप्रत्ययो धश्चान्तादेशो भवति । सन्ध्या उषाः ॥

---

१. 'सविक' ख. पाठः २. 'ल्यं' ग. पाठः.

जनिपुणिकृतिभ्यः क्यप् ॥ ३ ॥

एभ्यः क्यप्प्रत्ययो भवति। जन्यं सङ्ग्रामः। जाया पत्नी। पुण्यं सत्कर्म। कृन्ततीति कृत्या दुर्गा ॥

मध्यविन्ध्यशिक्यान्यपर्जन्यवदान्याघ्न्याहर्म्यधिष्ण्य-वस्त्यागस्त्यपुलस्त्यापत्यसत्यकुड्यकुल्याहल्यादयः ॥ ४ ॥

मध्यादयः शब्दाः क्यप्प्रत्ययान्ता निपात्यन्ते। मवेर्धश्च[1]। मध्यं गर्भः। विधेर्नुं च। विन्ध्यो गिरिः। श्येतेरिः कुट् च। शिक्यं लम्बमानैः पिचव्याद्याधारः। अनेर्निच्च। अन्यः सर्वनाम। पृजेरनट् च। पर्जन्यः मेघः। वदेरानुट् च। वदान्यः त्यागी। नञि हन्तेर्लोपश्चोपधायाः। अघ्न्या गौः। हृञो मुट् च। हर्म्यं सौधम्। धृषेर्नुक् धिष च। धिष्ण्यं भवनम्। वसेरादिवत्वं तुट् च। वस्त्यं गृहम्। स्तम्भेरगपुलयोर्डिच्च। अगस्त्यः मुनिः। पुलस्त्यः स एव। नञि पतेः करणे। अपत्यं पुत्रादि। अस्तेः सत् च। सत्यम् अमृषा। कुलेः कित् डश्च वा। कुड्यं भित्तिः। कुल्या सारणी। हलेर्नञि। अहल्या गौतमपत्नी। आदिग्रहणाद् नह्य(ल ? लि)ह्यद्रुह्यसह्यादयो भवन्ति ॥

तनिमलिवलिभ्योऽयन् ॥ ५ ॥

एभ्योऽयन्प्रत्ययो भवति। तनयः पुत्रः। मलयः पर्वतः। वलयः कटकः ॥

हृञो दुक् किच्च ॥ ६ ॥

हरतेरयन्प्रत्ययः किद् दुक् चागमो भवति। हृदयं मनः ॥

किसलयगयगवयमुकयकेकयादयः ॥ ७ ॥

किसलयादयः शब्दा अयन्प्रत्ययान्ता निपात्यन्ते। कसेरलुक् इत्वं चोपधायाः। किसलयं प्रवालम्। गमेर्डिच्च। गयः प्राणः। गया तीर्थम्। गुवोऽन्तोदात्तत्वं च। गवयः गवाकृतिः पशुविशेषः। मुचेः कुत्वं गुणाभावश्च। मुकयः मृगजातिः। कितः क च। केकयः क्षत्रियः। आदिग्रहणात् कणयादयो भवन्ति ॥

---

१. 'धे', २. 'नो वितर्यांद्या' ग. पाठः.

कषिकुलिलुलिकलिभ्य आयक् ॥ ८ ॥

एभ्यः आयक्प्रत्ययो भवति । कषायः कल्कादिः । कुलायो नीडः । लुलायो महिषः । कलायस्त्रिपुटः ॥

श्रुदक्षिस्पृहिभ्य आय्यः ॥ ९ ॥

एभ्य आय्यप्रत्ययो भवति । श्रवाय्यः श्रोता । दक्षाय्यः दक्षिता । स्पृहयाय्यः स्पृहयालुः ॥

दध्नि सुञो डित् ॥ १० ॥

दध्न्युपपदे सुनोतेराय्यप्रत्ययो डिद् भवति । दधिसांय्यम् ॥

कौतेरियः ॥ ११ ॥

कौतेरियप्रत्ययो भवति । कवियं खलीनम् ॥

कृञः कित् ॥ १२ ॥

करोतेरियप्रत्ययः किद् भवति । क्रियः मेषः ॥

मृजेर्ञालीयर् ॥ १३ ॥

मृजेर्ञालीयर्प्रत्ययो भवति । मार्जालीयः धिष्ण्योऽग्निः । 'मृजेर्वृद्धिः'। ञकार उत्तरार्थः ॥

वियस्तुट् च ॥ १४ ॥

[2]वेतेर्ञालीयर्प्रत्ययस्तुद् चागमो भवति । वैतालीयं छन्दोजातिः ॥

मदेः स्यन् ॥ १५ ॥

मदेः स्यन्प्रत्ययो भवति । मत्स्यो मीनः ॥

रुचिभुजिभ्यामिक् च ॥ १६ ॥

आभ्यां स्यन्प्रत्यय इक् चागमो भवति । रुचिष्यो वल्लभः । भुजिष्यः दासः । इको विधानसामर्थ्याद् गुणो न भवति ॥

वचेरष्यक् तश्च ॥ १७ ॥

---

१ 'षा' ग. पाठः. २. 'व्ययते' क. पाठः.

वचेरथ्यक्प्रत्ययस्तश्चान्तादेशो भवति। उतथ्यः मुनिः॥

वृङ एन्यः॥ १८॥

वृङो धातोरेन्यप्रत्ययो भवति। वरेण्यः श्रेयान्॥

अर्त्तेरन्यन्॥ १९॥

अर्त्तेरन्यनुँप्रत्ययो भवति। अरण्यं वनम्॥

हृञ इच्च॥ २०॥

हृञोऽन्यनुँप्रत्यय इकारश्चान्तादेशो भवति। हिरण्यं सुवर्णादिद्रव्यम्॥

स्फायितञ्चिवञ्चिशकिरिपिक्षिपिक्षुदिसृपितृपिवन्दुन्दिश्वितिवृत्यजिनीपदिमदिमुदिरुदिछिदिभन्दिमन्दिचन्दिदसिदहिहसिघसिदम्भिवसिशुचिशुभिभ्यो रक्॥ २१॥

एभ्यो रक्प्रत्ययो भवति। स्फारम् उल्बणम्। तक्रमुदश्वित्। वक्रं कुटिलम्। शक्रः इन्द्रः। रिप्रः कुत्सितः। क्षिप्रं शीघ्रम्। क्षुद्रमणीयः। सृप्रा नदी। तृप्रं मेघान्तघर्मः। वन्द्रं समूहः। उन्द्रः समुद्रः। श्वित्रं कुष्ठबिन्दुः। वृत्रः असुरः। अञ्रमजिरम्। नीरं जलम्। पद्रं ग्रामः। मद्रः क्षत्रियः वपनं च। मुद्रा चिह्नकरणम्। रुद्रः शम्भुः। छिद्रं विवरम्। भन्द्रं कल्याणम्। मन्द्रं गम्भीरम्। चन्द्रः शशी सुवर्णं च। दस्रौ अश्विनौ। दह्रः अग्निः। हस्रः हर्षुलः। घस्रः दिवसः। दभ्रः अल्पः। उस्रः रश्मिः। शुक्रः ग्रहः मासः शुक्लश्च। शुभ्रः अवदातः॥

चकिरम्योरुच्चोपधायाः॥ २२॥

आभ्यां रक्प्रत्यय उपधायाश्चोकारादेशो भवति। चुक्रं रसविशेषः। रुम्रः सुन्दरः॥

वौ कसेः॥ २३॥

कसेर्वावुपपदे रक्प्रत्यय उपधायाश्चोत्वं भवति। विकुस्रश्चन्द्रमाः॥

---

१. 'ण्यः', २, ३, ४. 'त' क पाठः। ५. 'भिदिम', ६. 'समुद्रः जलनिधि', ७. 'वीरः विक्रान्तः। नी' ख. पाठः.

**शदेरू च ॥ २४ ॥**

शदे रक्प्रत्यय उपधाया ऊ च भवति । शूद्रः चतुर्थो वर्णः ॥

**स्थश्च ॥ २५ ॥**

तिष्ठते रक्प्रत्यय ऊ चान्तादेशो भवति । स्थूरा कुष्ठिका ॥

**तम्यम्यर्दिजीनां दीर्घश्च ॥ २६ ॥**

तम्यादिभ्यो रक्प्रत्ययो दीर्घश्चैषां भवति । ताम्रः वर्णः शुल्बं च । आम्रः वृक्षः । आर्द्रं सरसम् । जीरम् अजाजी । लत्वेन जीलः चर्मपुटः ॥

**दुरीणो लोपश्च ॥ २७ ॥**

इणो दुर्युपपदे रक्प्रत्ययो लोपश्चास्य भवति । दूरं विप्रकृष्टम् ॥

**कृतेः क्रूछ्रौ च ॥ २८ ॥**

कृते रक्प्रत्ययः क्रूछ्रौ चादेशौ भवतः । क्रूरं निष्ठुरम् । कृच्छ्रं कष्टम् ॥

**वृधिरुधिवपीन्दिवज्यगिभीणभ्यो रन् ॥ २९ ॥**

एभ्यो रन्प्रत्ययो भवति । वर्ध्रं चर्म । रोध्रः वृक्षविशेषः । वप्रः केदरः तटश्च । इन्द्रः देवराजः । वज्रं कुलिशम् । अग्रं प्राग्भागः । भेरः भीरुः । एरा एरका ॥[1]

**अन्ध्ररन्ध्रसिलिन्ध्रोड्रू[2]पुण्ड्रतीव्रनीप्रशीघ्रोग्रगौरेराभद्रसान्द्रगुन्द्रादयः ॥ ३० ॥**

अन्ध्रादयः शब्दा रन्प्रत्ययान्ता निपात्यन्ते । अर्हेर्नुं धश्च । अन्ध्रः क्षत्रजातिः । रवेर्नुं[3] च । रन्ध्रं छिद्रम् । इन्धेः सिलिट् च । सिलिन्ध्रमुद्भिद्विशेषः । उणेरुडश्च । उड्रः क्षत्रजातिः । पुणेर्डुक्[4] च । पुण्ड्रः क्षत्रजातिः तिलकश्च । ति(ते ? जे)र्व्रो दीर्घश्च । तीव्रः तीक्ष्णः । नियः पुक् च । नीप्रः गृहच्छदिरुपान्तः । श्यैङः प्रसारणं घक् च । शीघ्रस्त्वरित । उषेर्गः किच्च । उग्रः रौद्रः रुद्रश्च । गुवो वृद्धिश्च गौरः अवदातः । इणः किच्च । इरा मदनीयः पानविशेषः । भन्देर्नलोपश्च । भद्रं

---

१. 'रः । भरि भीरुः । इरः घराका' क. पाठः. २. न्ध्रौ', ३. 'णेर्डश्च । ओड्रू', ४. 'पुडेर्नुं च' ग. पाठः

कल्याणम्। सदेर्नुं वृद्धिश्च। सान्द्रं घनम्। गुदेर्नुं च। गुन्द्रा जलतृणविशेषः। आदिग्रहणात् श्वभ्रादयो भवन्ति॥

सुसूधागृधिभ्यः क्रन्॥ ३१॥

एभ्यः क्रन्प्रत्ययो भवति। सुरा देवाः। सुरा मदिरा। सूरः सूर्यः। धीरः अनाकुलः। गृध्रः कङ्कः॥

शुसिचिभ्यां दीर्घश्च॥ ३२॥

एभ्यः क्रन्प्रत्ययो दीर्घश्चैषां भवति। शूरः विक्रान्तः। सीरं हलम्। चीरं जीर्णवासः। मीरा सीमान्तः॥

वाविन्धेः॥ ३३॥

इन्धेर्वावुपपदे क्रन्प्रत्ययो भवति। वीध्रं निर्मलम्॥

ऋच्छेररः॥ ३४॥

ऋच्छेररप्रत्ययो भवति। ऋच्छरस्त्वरावान्॥

कॄगॄघॄजॄझॄदॄवॄभॄमॄभ्यः सधात्वादिष्टित्॥ ३५॥

कॄप्रभृतिभ्यः अरप्रत्ययः धात्वादिभूतैः कादिभिः सह टिद् भवति। एतेन कॄआदिभ्यः करड्गरटादयः प्रत्यया भवन्तीत्युक्तं भवति। कर्करः क्षुद्राश्मा। कर्करी वर्धनिका। गर्गरः राजर्षिः। गर्गरी महाकुम्भः। घर्घरः सघोषाव्यक्तवाक्। घर्घरी किङ्किणिका। जर्जरः अदृढः। जर्जरी स्त्री। झर्झरः वाद्यविशेषः। झर्झरी झल्लरिका। दर्दरः वाद्यविशेषः। दर्दरी सस्यलुण्टिः। बर्बरः म्लेच्छजातिः। बर्बरी कैश्यविशेषः। भर्भरः छद्मवान्। भर्भरी स्त्री। मर्मरः शुष्कपत्रप्रकरः। तद्धर्मान्योऽपि क्षुदसहिष्णुः मर्मरः। अस्माच्च बहुलाधिकारात् मर्मरायां दूर्वायामित्यादौ टित्त्वेऽपि ङीप् न भवति॥

मुदेर्गुक् च॥ ३६॥

मुदेररप्रत्ययः स च टित् गुक् चागमो भवति। मुद्गरः प्रहरणविशेषः। मुद्गरी स्त्री॥

---

१. 'रः। ब' ग. पाठः.

गूरेर्जुक् च ॥ ३७ ॥

गूरेररप्रत्ययष्टित् जुक् चास्यागमो भवति । गूर्जरः सौराष्ट्रादिः । गूर्जरी स्त्री ॥

सुन्दिकन्दिमन्दिमन्थिमञ्जिपञ्जिपिञ्जिभ्रमिचमिचटिवठिमठिदेविवासिकास्यर्त्तिकुटिकेबिशबिदुकदिवदिभ्यो नित् ॥ ३८ ॥

सुन्द्यादिभ्यः अरप्रत्ययो नित् भवति । सुन्दरः मनोज्ञः । कन्दरः । गिरिगर्त्तः । मन्दरः शैलः । मन्थरः मन्दः खर्वश्च । मञ्जरी आम्रादिशिखा । गौरादित्वात् ङीष् । पञ्जरः शुकाद्यवरोधसद्म । पिञ्जरः पिशङ्गः । भ्रमरः षट्पदः । चमरः आरण्यपशुः । चटरः मधुकन्धरा । वठरः मूर्खः । मठरः मुनिः । देवरः पत्यनुजः । वासरः दिवसः । कासरो महिषः । अररं कवाटम् । बहुलवचनाद् गुणः । कोटरः छिद्रम् । कबरो वर्णः । कबरी वेणिः । शबरः पुलिन्दः । दवरः गुणः । कदरो वृक्षविशेषः । बदरी वृक्षः ॥

जठरपिठरकुररक्रकरमकरशिखरशेखरोदरडहरकुहरकूर्परकर्परशफरडमरडामरपामरसगरतगरतोमराजगरादयः ॥ ३९ ॥

जठरादयः शब्दा अरप्रत्ययान्ता निपात्यन्ते । जनेष्ठ च । जठरं कोष्ठः पिठिकुरोरगुणत्वं च । पिठरं भाण्डम् । कुररः पक्षिविशेषः । क्रमेः कश्च । क्रकरः कौरातितिरिः । मङ्केर्नलोपश्च । मकरः ग्राहः । शाखेरिदेतौ चोपधायाः । शिखरमग्रभागः । शेखरम् आपीडम् । उन्देर्नलोपश्च । उदरं जठरम् । देहेरादेर्डश्च । डहरं हृत्कमलम् । कुहेरगुणत्वं च । कुहरं गम्भीरगर्त्तः । कृपेरुपधाया उच्च वा । कूर्परः कफोणिः । कर्परः मगालम् । शपः फ च । शफरः क्षुद्रमत्स्यः । दमेर्णिद्वा आदेश्च डः । डमरः भयानकः । डामरः स एव । पातेर्मुट् च । पामरः ग्रामीणः । सहेर्गश्च । सगरः राजा ।

१. 'रः रा', २. 'कुशुदु' क. पाठः. ३. 'दाबिकदि' ख. पाठः. ४. 'करण्डरा।' ग. पाठः. ५. 'रौ' क. पाठः, ६. 'व' ग. पाठः.

तङ्गेर्नलोपश्च । तगरः वृक्षविशेषः । तुपो मुट् च । तोमरः आयुधम् । अजे-[1] रगट् च । अजगरः शयुः । आदिग्रहणात् कडङ्गराडङ्गरसङ्गरादयो भवन्ति ॥

अग्यङ्गिमन्दिमदिकडिकासिभ्य आरन् ॥ ४० ॥

एभ्य आरन्प्रत्ययो भवति । अगारं वेश्म । अङ्गारः अग्न्युच्छिष्टम् । मन्दारः वृक्षविशेषः । मदारः वराहः । कडारः पिङ्गलः । कासारः पल्वलम् ॥

कञ्जिमृजिभ्यां चित् ॥ ४१ ॥

आभ्यामारन्प्रत्ययश्चिद् भवति । कञ्जारः कुसूलः । मार्जारो बिडालः ॥

कृञो मुट् च ॥ ४२ ॥

करोतेरारन्प्रत्ययश्चित् मुट् चास्यागमो भवति । कर्मारो लोहकारः ॥

तुषिकुठिभ्यां किच्च ॥ ४३ ॥

आभ्यामारन्प्रत्ययश्चित् किच्च भवति । तुषारः हिमम् । कुठारः परशुः ॥

कमेरत उच्च ॥ ४४ ॥

कमेरारन्प्रत्ययश्चित् कित् अकारस्य चोकारादेशो भवति । कुमारः पौगण्डः ॥

शृङ्गारभृङ्गारकल्हारकान्तारकेदारकोविदारकर्बुदारकाञ्चनारादयः ॥ ४५ ॥

शृङ्गारादयः शब्दा आरन्प्रत्ययान्ता निपात्यन्ते । श्रिञः प्रसारणं शुक् नुं च । शृङ्गारो रसविशेषः । भृञोऽगुणत्वं शुक् नुं च । भृङ्गारः करकः । कलेर्हट् च । कल्हारः उत्पलविशेषः । कमेस्तट् दीर्घश्च । कान्तारमरण्यम् । कदेरेच्चोपधायाः । केदारः वप्रः । कनेः कोविदकर्बुदकाञ्चनाश्च । कोविदारः वृक्षविशेषः । कर्बुदारः तद्भेदः । काञ्चनारः तद्भेदश्च । आदिग्रहणात् दीनारमसारादयो भवन्ति ॥

---

१. 'ञे' ग. पाठः.

इषिरुचिरुधितिमिमिहिमदिमन्दिचन्दिखदिबाधिभ्यः किरच् ॥ ४६ ॥

एभ्यः किरच्प्रत्ययो भवति । इषिरः क्षिप्रः सेव्यश्च । रुचिरो मनोज्ञः । रुधिरं लोहितम् । तिमिरमन्धकारः । मिहिरः सूर्यः । मदिरा सुरा । मन्दिरं वेश्म । चन्दिरं चन्द्रिका । खदिरः वृक्षविशेषः । बधिरः श्रोत्रविकलः ॥

स्थिरस्फिराजिरशिशिरशिथिरस्थविरकविराशिरशिबिरसरिरादयः ॥ ४७ ॥

स्थिरादयः शब्दाः किरच्प्रत्ययान्ता निपात्यन्ते । स्थो निच्च । स्थिरः अचलः । स्फायो डित् । स्फिरः स्फारः । अजेर्वीभावाभावः । अजिरमङ्गणम् । शशेरिच्चातः । शिशिरं शीतलम् । श्लथेः शिथ च । शिथिरं श्लथम् । लत्वेन शिथिलम् । स्थो वुक् ह्रस्वश्च । स्थविरो वृद्धः । कौतेर्गुणश्च । कविरः अक्षिकोणः । अशेर्णिच्च । आशिरः सूर्यः । शीङो वुग्घ्रस्वश्च । शिबिरं सैन्यनिवेशः । सर्त्तेर्गुणः । सरिरं जलम् । लत्वेन सलिलम् । आदिग्रहणात् छिदिरभिदिरादयो भवन्ति ॥

कॄशॄशौडिमञ्जिकुटिपटिपूङ्भ्य ईरच् ॥ ४८ ॥

एभ्य ईरच्प्रत्ययो भवति । करीरः वृक्षः । शरीरं वपुः । शौडीरः गर्ववान् । मञ्जीरः नूपुरः । कोटीरः मुकुटः । बहुलवचनाद् गुणः । पटीरः कार्मुकम् । पवीरः बीजावपनम् ॥

वशिघसिकुरिकुलिभ्यः कित् ॥ ४९ ॥[2]

एभ्य ईरच्प्रत्ययः किद् भवति । उशीरं वीरणमूलम् । घसीरं[3] दुग्धम् । कुरीरं मैथुनम् । कुलीरः कर्कटः ॥

डिण्डीरवानीराभीरगभीरगम्भीरकुम्भीरकश्मीरकीरजम्बीरकिर्मीरादयः ॥ ५० ॥

१. 'कावत् ।' ग. पाठः. २. 'शिक्षिवसिघ' ख. पाठः. ३. 'क्षीरं' ग. पाठः.

डिण्डीरादयः शब्दा ईरच्प्रत्ययान्ता निपात्यन्ते । डीङो डित् द्वित्वमभ्यासस्य नुं च । डिण्डीरः फेनः । वनेर्वृद्धिश्च । वानीरो वेतसः । आपो भश्च । आभीरः शूद्रजातिः । गमेर्भोनुं च वा । गभीरः अक्षोभ्यः । गम्भीरः स एव । स्कुभेः सलोपश्च । कुम्भीरः जलचरः । कशेर्मुक् च । कश्मीराः जनपदः । कायः कित् । कीरः शुकः । जनेर्बुक् च । जम्बीरः वृक्षविशेषः । किरः किर्मुक् च । किर्मीरः कर्बुरः । आदिग्रहणात् तूणीरनासीरकरवीरादयो भवन्ति ॥

कर्बिमन्दिवाशिमसिचातिचङ्क्यङ्किभ्य उरच् ॥ ५१ ॥

एभ्य उरच्प्रत्ययो भवति । कर्बुरः शवलः । मन्दुरा अश्वशाला । वाशुरो वायसः । मसुरा पण्यस्त्री । चतुरो विदग्धः । चङ्कुरः शठः । अङ्कुरः प्ररोहः ॥

मुर्मुरमुकुरदर्दुरचिकुरकुक्कुरकुकुरकुकुन्दुरोन्दुरनूपुरविधुरमद्गुरवागुरादयः ॥ ५२ ॥

मुर्मुरादयः शब्दा उरच्प्रत्ययान्ता निपात्यन्ते । मुरेर्मुक् च । मुर्मुरः कुकूलम् । मुचेः कः किच्च । मुकुर आदर्शः मुकुलं च । दृणो दुक् च दर्दुरो मण्डूकः । चकेरिच्चोपधायाः । चिकुरः अलकः । कुकेः कुक् च । कुक्कुरः श्वा । केचित् कुर्कुर इति पठन्ति । तत्र किर उत्वं कुक् च । कुकेर्गुणाभावश्च । कुकुरो यादवः । कौ कन्देरुच्चातः । कुकुन्दुरौ नितम्बकूपकौ । उन्देर्नित्त्व । उन्दुरः मूषिकः । नुवः पुक् दीर्घश्च । नूपुरः तुलाकोटिः । व्यथेः प्रसारणं च । विथुरः राक्षसः । मदिवात्योर्गुक् च । मद्गुरो मत्स्यविशेषः । वागुरा मृगानायः । आदिग्रहणात् विधुरनिधुरमधुरादयो भवन्ति ॥

असेरुरन् ॥ ५३ ॥

असेरुरन्प्रत्ययो भवति । असुरः दैत्यः ॥

शावशेराप्तौ ॥ ५४ ॥

---

१. 'का', २. 'रः रथः । अ', ३. 'मृङः उर्मुं', ४. 'चेः' ग. पाठः.

अश्नोतेः श्वावुपपदे आप्तौ गम्यमानायामुरन्प्रत्ययो भवति । श्वशुरः जायापत्योः पिता ॥

मसेरूरन् ॥ ५५ ॥

मसेरूरन्प्रत्ययो भवति । मसूरः धान्यविशेषः ॥

कृञश्चुक् च ॥ ५६ ॥

करोतेरूरन्प्रत्ययश्चुगागमश्च भवति । कर्चूरः षंडी ॥

खर्जिखडिकृपिवल्लिमयिमण्डिभ्यः ऊरः ॥ ५७ ॥

खर्ज्यादिभ्य ऊरप्रत्ययो भवति । खर्जूरः वृक्षविशेषः । खडूरः खुरलीस्थानम् । कर्पूरः गन्धद्रव्यम् । वल्लूरो मांसपेशी । मयूरः शिखी । मह्यां रौति मयूर इति अग्रतः पृषोदरादिषु वक्ष्यमाणसंज्ञाशब्दानाम् अनेकधा व्युत्पत्तिं लक्षयति । मण्डूरः कल्कविशेषः ॥

तलिमलिशलिभ्यो णित् ॥ ५८ ॥

एभ्य ऊरप्रत्ययो णिद् भवति । तालूरो जलावर्तः । मालूरो बिल्वः । शालूरो दर्दुरः ॥

विडूरसिन्दूरपत्तूरधुस्तूरधुत्तूरादयः ॥ ५९ ॥

एते शब्दा ऊरप्रत्ययान्ता निपात्यन्ते । विडेर्गुणाभावश्च विडूरः पर्वतविशेषः । स्यन्देः सम्प्रसारणं च । सिन्दूरं चीनपिष्टः । पतेस्तुक् च । पत्तूरं गन्धद्रव्यम् । धुवः स्तुक्तुकौ च । धुस्तूरः उन्मत्तः । धुत्तूरः स एव । आदिग्रहणात् कस्तूरहूरहूरादयो भवन्ति ॥

पतिकठिकुठिकु(म्बि)गडिगुडिदंशिभ्य एरक् ॥ ६० ॥

एभ्य एरक्प्रत्ययो भवति । पतेरः पक्षी । कठेरः दुःखितः । कुठेरः अर्जकः । (कुम्बेर्नलोपश्च ।) कुबेरो धनदः । गडेरः मेघः । गुडेरः राजा । दशेरः जनपदः ॥

शतेरमूलेरमुदेरादयः ॥ ६१ ॥

---

१. 'ओषधिः ॥', २. 'खी । मण्डू', ३. 'करभूरा', ४. 'स' ग. पाठः.

शं[1]तेरादयः शब्दा एरक्प्रत्ययान्ता निपात्यन्ते । शं[2]देस्त च । शं[3]तेरः रागः । मूलिमुदोर्निच्च[4] । मूलेरं पण्यम् । मुदेरः मूर्खः । आदिग्रहणाद् गुंवेर[5]नालिकेरशृङ्गबेरादयो भवन्ति ॥

कठिचकिभ्यामोरः ॥ ६२ ॥

आभ्यामोरप्रत्ययो भवति । कठोरः कठिनः । चकोरः पक्षिविशेषः ॥

कशेरत इच्च ॥ ६३ ॥

कशेरोरः प्रत्ययः अकारस्य चेकारादेशो भवति । किशोरः बालः ॥

श[6]व[7]किभ्यः करन् ॥ ६४ ॥

एभ्यः करन्प्रत्ययो भवति । शर्करा (उपलखण्डः) । बर्करः छागशिशुः । केकरो वक्रदृष्टिः ॥

सूपुषिभ्यां कित् ॥ ६५ ॥

आभ्यां करन्प्रत्ययः किद् भवति । सूकरो वराहः । पुष्करम् अन्तरिक्षादि ॥

अनिकाभ्यां तरन्[8] ॥ ६६ ॥

आभ्यां तरन्[9]प्रत्ययो भवति । अन्तरं सर्वनाम च । कातरो भीरुः ॥

इणपूभ्यां कित् ॥ ६७ ॥

आभ्यां तरन्प्रत्ययः कित् भवति । इतरः निर्दिष्टप्रतियोगी । पूतरो जलजन्तुः ॥

क्यजिमामद्यशूभ्यः सरन् ॥ ६८ ॥

किप्रभृतिभ्यः सरन्प्रत्ययो भवति । केसरः बकुलः । केसरं पद्मावयवाः सिंहादिसटा च । वै[10]सरः अश्वतरः । मासरः आचामः । मत्सरः क्रोधविशेषः । अक्षरं वर्णम् ॥

---

१, २, ३. 'स', ४. 'क', ५. 'ञ्जिवे' ग. पाठः. ६, ७. 'च्' क. पाठः. ८ 'मध्यम् । का', ९. 'तः' ग. पाठः. १०. 'अजिरम् । मा' क. पाठः.

वसेश्च ॥ ६९ ॥

वसेश्च सरन्प्रत्ययो भवति । वत्सरो हायनः ॥

सपूर्वाच्चित् ॥ ७० ॥

सपूर्वाद् वसेः सरन्प्रत्ययश्चिद् भवति । संवत्सरः । परिवत्सरः । इदावत्सरः । इद्वत्सरः ॥

ऋषितनिकृधूकिभ्यः कित् ॥ ७१ ॥

एभ्यः सरन्प्रत्ययः किद् भवति । ऋक्षरः कण्टकः । तसरः कौशेयसूत्रम् । कृसरः हविर्विशेषः । धूसरो धान्यविशेषः वर्णश्च । किसरः गन्धद्रव्यम् ॥

कृशृगृचतिकटिभ्यः ष्वरच् ॥ ७२ ॥

एभ्यः ष्वरच्प्रत्ययो भवति । कर्वरो व्याघ्रः । कर्वरी स्त्री । शर्वरः सायाह्नः । शर्वरी रात्रिः । गर्वरोऽहङ्कारः । गर्वरी सन्ध्या । चत्वरं चतुष्पथम् । चत्वरी वेदिः । कट्वरो व्यालाश्वः । कट्वरी दधिविकारः ॥

छित्वरछत्वरधीवरपीवरचीवरगह्वरोपह्वरसंयद्वरनिषद्वरोदुम्बरकूबरतूवरादयः ॥ ७३ ॥

एते शब्दाः ष्वरच्प्रत्ययान्ता निपात्यन्ते । छिदेस्तः किच्च । छित्वरो धूर्त्तः । छदेर्णिलुक् तश्च । छत्वरं छदिः । ध्यायो धी च । धीवरः कैवर्त्तः । प्यायः पी च । पीवरः मांसलः । चिञो दीर्घश्च । चीवरं व्रतिवासः । गुहेरच्चोपधायाः । गह्वरं गहनम् । उपे ह्वो वादिलोपश्च । उपह्वरं समीपम् । सामि यमो दश्च । संयद्वरः संयमी । नौ सदेर्निच्च । निषद्वरमासनम् । निषद्वरी प्रपा । उन्देः किदुमद् च । उदुम्बरो वृक्षविशेषः । कुतुवोर्दीर्घश्च । कूबरो रथावयवः । तूवरः मन्दश्मश्रुः अजनः (नीच ? नश्च) । आदिग्रहणादाडम्बरशम्बराम्बरादयो भवन्ति ॥

कलेरेवरः ॥ ७४ ॥

---

१. 'तृशृ' क. पाठः. २. 'गृशृच', ३. 'तिषकिकुटि' ख. पाठः. ४. 'न'; ५. 'श्रुः । श्रा' क. पाठः.

कलेरेवरप्रत्ययो भवति। कलेबरं शरीरम्॥

ष्ट्रन्॥ ७५॥

सर्वधातुभ्यः ष्ट्रन्प्रत्ययो भवति। छादयतीति छत्रं छत्री वा घर्म-वारणम्। पातीति पात्रम् ऊर्जितगुणाधारो ब्राह्मणादिः। स्नात्रं स्नानम्। राजत इति राष्ट्रं देशः॥

अरिजगमिनमिनाशिहनिविश्यशां वृद्धिश्च॥ ७६॥

एभ्यः ष्ट्रन्प्रत्ययो भवति। वृद्धिश्च। आष्ट्रम् अम्बरीषः। गान्त्रं मनः। नान्त्रं शिरः। नाष्ट्रो यातुधानः। हान्त्रं रक्षः। वैष्ट्रः विष्णुः। आष्ट्रम् आकाशः॥

दिवेर्दौ[2] च॥ ७७॥

दिवेः ष्ट्रन्प्रत्ययो दौ[3] चादेशो भवति। दौत्रं[4] त्रिदिवं विमानं च॥

उषिखनिसूमूभ्यः कित्॥ ७८॥

एभ्यः ष्ट्रन्प्रत्ययः किद् भवति। उष्ट्रः करभः। खात्रं ग्रामाधार-भृत्। सूत्रं तन्तुः। मूत्रं प्रस्रावः॥

स्त्यायो डित्॥ ७९॥

स्त्यायतेः ष्ट्रन्प्रत्ययो डिद् भवति। स्त्री योषित्॥

हुयामाश्रुलुपिवसिभसिभ्यस्त्रन्॥ ८०॥

एभ्यस्त्रन्प्रत्ययो भवति। होत्रं[5] होमः। यात्रा प्रस्थानं यापनम् उत्सवश्च। मात्रा स्तोकः गणना च। श्रोत्रं श्रवणम्। लोप्त्रम् अपहृत-द्रव्यम्। वस्त्रं वासः। भस्त्रा चर्ममयमावपनम्॥

गमेरा च॥ ८१॥

गमेस्त्रन्प्रत्यय आकारश्चान्तादेशो भवति। गात्रं शरीरम्॥

अभिचिमिदिशंसिभ्यः कित्॥ ८२॥

---

१. 'मा', २. 'द्यौ', ३. 'द्यौ', ४. 'द्यो' ग. पाठः. ५. 'त्रः' क. पाठः.

N

एभ्यस्त्रन्प्रत्ययः किद् भवति । आन्त्रं पुरीतत् । चित्रमाश्चर्यं लेख्यवर्णश्च । मित्रं सुहृत् । अमित्रं शत्रुः । मित्रः सूर्यः । शस्त्रं स्तोत्रम् ॥

पूङो ह्रस्वश्च ॥ ८३ ॥

पूङस्त्रन्प्रत्ययः कित् ह्रस्वश्च भवति । पुनातीति पुत्रः सूनुः । पुन्नाम्नो नरकात् त्रायत इति व्युत्पत्तिस्तु संज्ञाशब्दानामनेकधात्वाख्यानं लक्षयति ॥

गुवृवीपचिवचियमिमनितनिसदिक्षदिक्षिभ्यो नित् ॥ ८४ ॥

एभ्यस्त्रन्प्रत्ययो निद् भवति । गोत्रमन्ववायः । वर्त्रं चर्म । वेत्रं वीरुद्विशेषः । पक्त्रः अग्निः । वक्त्रमास्यम् । यन्त्रमरघट्टादिः । मन्त्रः इषेत्वादिः । तन्त्रं प्रसारितास्तन्तवः समूहश्च । सत्त्रं छद्म यागविशेषश्च । क्षत्त्रं जातिः । क्षेत्रं भूम्यादिः ॥

अमियजिवधिपतिकलिनक्षिभ्योऽत्रन् ॥ ८५ ॥

एभ्योऽत्रन्प्रत्ययो भवति । अमत्रं भाजनम् । यजत्रः यज्वा । वधत्रम् आयुधम् । पतत्रं पक्षः । कलत्रं दाराः जघनं च । नक्षत्रं तारा । नदीसूत्रे नक्षत्र इति वक्ष्यमाणसंज्ञाशब्दानाम् अनेकधा व्युत्पत्तिं लक्षयति ॥

वृञश्चित् ॥ ८६ ॥

वृञोऽत्रन्प्रत्ययश्चिद् भवति । वरत्रा रज्जुः ॥

अशि[1]वहिकटिभ्य इत्रः ॥ ८७ ॥

एभ्य इत्रप्रत्ययो भवति । अशि[2]त्रमन्नपानम् । वहित्रं वाहनम् । कटित्रं लेख्यकर्[3]म ॥

त्रादिभ्य उत्रः ॥ ८८ ॥

त्रादिभ्य उत्रप्रत्ययो भवति । तरुत्रं प्लवः । करुत्रम् अभिप्रेतम् ॥

स्याशक्यमिभ्यो लः ॥ ८९ ॥

१., २. 'षि' क. पाठः. ३. 'च' ग. पाठः.

एभ्यो लप्रत्ययो भवति । स्यालः पत्नीभ्राता । शक्लो मनोज्ञदर्शनः । अम्लः रसः ॥

शीङः क्लन् ॥ ९० ॥

शीङः क्लन्प्रत्ययो भवति । शीलं स्वभावः ॥

भिल्लाच्छभल्लसौविदल्लादयः ॥ ९१ ॥

भिल्लादयः शब्दाः क्लन्प्रत्ययान्ता निपात्यन्ते । भिलेश्चित्त्व । भिल्लः अन्त्यजातिः । अच्छे भलेश्च । अच्छभल्लः ऋक्षः । सुञि विदेरलुक् सौ च सुञः । सौविदल्लः कञ्चुकी ॥

मङ्गिमृदिमण्डिकुण्डिकन्दिभ्योऽलच् ॥ ९२ ॥

एभ्यः अलच्प्रत्ययो भवति । मङ्गलं भद्रम् । मर्दलो मुरजः । मण्डलं देशः राष्ट्रं च । कुण्डलं कर्णाभरणम् । कन्दलं प्ररोहः ॥

लङ्गेर्दीर्घश्च ॥ ९३ ॥

लङ्गेरलच्प्रत्ययो दीर्घश्च भवति । लाङ्गलं हलम् ॥

ऋजनोर्गुक् च ॥ ९४ ॥

आभ्यामलच्प्रत्ययो गुक् चागमो भवति । अर्गलं परिघा । जङ्गलं निर्जलो देशः ॥

कुकमियमिशमिशकिशवितृपिकुपिशलिकालिपलिभ्योऽलक् ॥ ९५ ॥

एभ्योऽलक्प्रत्ययो भवति । कुवली क्षुद्रबदरी । कमलं पद्मम् । यमलं युग्मम् । शमलं शकृत् । शकलं खण्डम् । शबलः कल्माषः । तृपला लता । कुपलः प्रवालः । शललं शल्याङ्गरुहं श ··· कुरच । कललं गर्भप्रथमावस्था । पललं भृष्टतिलातसीचूर्णम् ॥

वृषिपटिदेविकेविवपिचापिभ्यश्चित् ॥ ९६ ॥

एभ्योऽलक्प्रत्ययश्चिद् भवति । वृषलः शूद्रः । पटलः छदिः समूहः आवपनं नेत्ररोगश्च । देवलः ऋषिः । केवलः एकः । उपलः पाषाणः । चपलः अस्थिरः ॥

कृगुध्वाञ्चिचञ्चिवहिदिहितृसृतुसिकुसिभ्योऽलः ॥ ९७ ॥

एभ्योऽलप्रत्ययो भवति । कबलः ग्रासः । गवलो महिषः । धवलः श्वेत । अञ्चलो वस्त्रान्तः । चञ्चलः अस्थिरः । बहलः घनः । देहली द्वाराधःपट्टः । तरलः अधीरः हारमध्यमणिश्च । सरलः अकुटिलः वृक्षविशेषश्च । तोसलाः कोसला जनपदः ॥

मुरलोरलमुसलकुशलकोमलकोहलविरलकेरलकुन्तलकापिञ्जलकज्जलेज्जलच्छगलभगलाहलकाहलनाहलानलयुगलपिप्पलादयः ॥ ९८ ॥

एते शब्दा अलप्रत्ययान्ता निपात्यन्ते । मुर्व्युर्व्योर्वलोपः किच्च । मुरला जनपदः । उरलः उत्कटः । मुसेः किच्च । मुसलं प्रहरणम् । कुशेः किच्च । कुशलो दक्षः । कुशं लातीति व्युत्पत्तिः संज्ञाशब्दानामनेकधात्वाख्यानं ख्यापयति । कमेरत उच्च । कोमलम् अजरठम् । कुहेर्णिच्च । कोहलः भरतसूनुः । वीरेर्ह्रस्वश्च । विरलः असंहत. । किरः केर च । केरला जनपदः । कनेरत उत् तुट् च । कुन्तला जनपदः । कम्पेरिञ्जक् नलोपश्च । कापिञ्जलः गौरास्तित्तिरिः । कषीषोर्जक् जश्च । कज्जलं मषी । इज्जलो वृक्षविशेषः । छाभोर्गुग्घ्रस्वश्च । छगलः छागः मुनिश्च । भगलः मुनिः । आङि हनो डिच्च । आहलं विषाणं नखश्च । कणेर्हो वृद्धिश्च । काहलः वाद्यविशेषः तुमुलः व्याकुलश्च । नहेर्वृद्धिश्च । नाहलो म्लेच्छः । अनेर्णिच्च । अनलः अग्निः । युजेर्गश्च । युगलं युग्मम् । पिवः पुंपश्च । पिप्पलः अश्वत्थः । आदिग्रहणाद् मुद्गलपुद्गलादयो भवन्ति ॥

ऋकृमृवृचषिभ्य आलच् ॥ ९९ ॥

एभ्य आलच्प्रत्ययो भवति । अरालं वक्त्रम् । करालमुच्चम् । मरालो हंसः महांश्च । वरालः वदान्यः । चषालः यूपकटकः ॥

तमिबिडिमृणिकुणिकुलिपलिपञ्चिपीङ्भ्यः कालन् ॥ १०० ॥

एभ्यः कालन्प्रत्ययो भवति । तमालः वृक्षविशेषः । बिडालो मार्जारः । मृणालं बिसम् । कुणालं वीरुद्विशेषः । कुलालः कुम्भकारः । पलालमणुव्रीह्यादि । पञ्चाला जनपदः । पियालश्चरः ॥

कम्पेर्नलोपश्च ॥ १०१ ॥

कम्पेः कालन्प्रत्ययो नलोपश्च भवति । कपालं घटाद्यवयव ॥

भञ्जेर्गश्च ॥ १०२ ॥

भञ्जेः कालन्प्रत्ययो गश्चान्तादेशो भवति । भगालं घटकर्परः ॥

सर्त्तेर्गुक् च ॥ १०३ ॥

सर्त्तेः कालन्प्रत्ययो गुक् चागमो भवति । सृगालः गोमायुः ॥

स्थालचात्वालकीलालकङ्कालहिन्तालवेतालजम्बाला-दयः ॥ १०४ ॥

स्थालादयः शब्दाः कालन्प्रत्ययान्ता निपात्यन्ते । स्थश्चिन्त्य । स्थालं भजनम् । चतेर्वुक् वृद्धिश्च । चात्वालः यज्ञगर्त्तः । कलेः ई चातः । कीलालं मद्यम् असृक् च । ककेर्नुं च । कङ्कालः कलेवरम् । हिंसेस्त च । हिन्तालः वृक्षविशेषः । वियस्तुक् गुणश्च । वेतालः रजनिचर-विशेषः । जमेर्बुक् च । जम्बालः कर्दमः शैवलं च । आदिग्रहणात् चक्रवालकरवालालवालादयो भवन्ति ।

पतिचण्डिभ्यामालञ् ॥ १०५ ॥

आभ्यामालञ्प्रत्ययो भवति । पातालं रसातलम् । चण्डालो बनङ्गमः ॥

कुटिमहिमिथ्यनिभ्यः किलच् ॥ १०६ ॥

एभ्यः किलच्प्रत्ययो भवति । कुटिलं वक्रम् । महिला स्त्री । मिथिला नगरी । अनिलो वायुः ॥

भडिलभण्डिलशाण्डिलस्थण्डिलकोकिलकपिलविच-किलादयः ॥ १०७ ॥

भडिलादयः शब्दाः किलच्प्रत्ययान्ता निपात्यन्ते । भण्डेर्नलोपश्च वा । भडिलः ऋषिः । भण्डिलः ऋषिः । शमेर्डक् च । शण्डिलः ऋषिः । स्थलेर्नुं डश्च । स्थण्डिलं व्रतिशयनवेदिका । कुकेर्गुणश्च । कोकिलः परभृतः ।

कमेः पश्च । कपिलो मुनिर्वर्णश्च । विचेरकट् च । विचकिलः मल्लिकाविशेषः । आदिग्रहणात् चण्डिलगोभिलनिकुम्भिलादयो भवन्ति ॥

हृषिवृतिचटितण्डिशकिशङ्क्युत्कण्ठिभ्य उलच् ॥ १०८ ॥

एभ्य उलच्प्रत्ययो भवति । हर्षुलः हर्षवान् । वर्तुलः वृत्तः । चटुलः चञ्चलः । तण्डुलः निस्तुषो व्रीह्यादिः । शकुलो मत्स्यः । शङ्कुला क्रीडनकशङ्कुः । उत्कण्ठुलः उत्कण्ठावान् ॥

निचुलवञ्जु[1]लवकुलतुमुलपृथुलस्थुलविशंस्थुलादयः ॥ १०९ ॥

एते शब्दा उलच्प्रत्ययान्ता निपात्यन्ते । निजेश्चः किच्च । निचुलो वञ्जुलः । वजेर्नु च । वञ्जुलः निचुलः । वचेः क च । बकुलः केसरः । तमेरुच्चातः । तुमुलो भयङ्करः । प्रथेः प्रसारणं च । पृथुलो विस्तीर्णः । स्थः किच्च । स्थुलः पटकुटीविशेषः । वौ शंसेस्थक् च । विशंस्थुलः व्यग्रः । आदिग्रहणात् लकुलवल्गुलादयो भवन्ति ॥

पिञ्ज ऊलच् ॥ ११० ॥

पिञ्ज ऊलच्प्रत्ययो भवति । पिञ्जूलो हस्तिबन्धनपाशः ॥

कुसूलकुकूलदुकूलताम्बूलबन्धू[2]ललाङ्गूलशार्दूलादयः ॥ १११ ॥

कुसूलादयः शब्दा ऊलच्प्रत्ययान्ता निपात्यन्ते । कसेरत उच्च । कुसूलः कोष्ठम् । कुदुवोः कुक् किच्च । कुकूलं कारीषोऽग्निः[3] । दुकूलं क्षौमं वासः । तमेर्बुक् दीर्घश्च । ताम्बूलं पूगपर्णचूर्णसंयोगः । ब(न्धे ? धे)र्नु[4] च । बन्धूलो वृक्षविशेषः । लङ्गेर्दीर्घश्च । लाङ्गूलं वालधिः । शृणातेर्दुक् वृद्धिश्च । शार्दूलो व्याघ्रः । आदिग्रहणान्मातूंलवञ्चूलकवूलादयो भवन्ति ॥

महे[5]रेलच् ॥ ११२ ॥

महे[6]रेलच्प्रत्ययो भवति । महेला स्त्री ॥

कटिपटिभ्यामोलः ॥ ११३ ॥

---

१. 'ञ्जु' क. पाठः; २. 'ल्बू', ३. 'न्यलुं बश्च । बल्बूलो', ४. 'कू' ग. पाठ. ५, ६. 'र', ७. 'हलस्तरुत्वक्' क. पाठः

आभ्यामोलः प्रत्ययो भवति । कटोल ओषधिः । पटोलः ओषधिः ॥

कपोलकल्लोलकङ्कोलमक्कोलादयः ॥ ११४ ॥

एते शब्दा ओलप्रत्ययान्ता निपात्यन्ते । कम्पेर्नलोपश्च । कपोलः वदनैकदेशः । कलेर्लक् च । कल्लोलः ऊर्मिः । कचिमचोः क कट् च । कक्कोली लताभेदः । मक्कोलः सुधाभेदः । आदिग्रहणाद् गैण्डोलादयो भवन्ति ॥

वलेः कलच् ॥ ११५ ॥

वलेः कलच्प्रत्ययो भवति । वल्कलं तरुत्वक् ॥

मिञः खलच् एच्च ॥ ११६ ॥

मिञः खलच्प्रत्ययश्चकारात् कलच्च एकारश्चान्तादेशो भवति । मेखला गिरिनितम्बः रशना च । मेकलः नर्मदाप्रभवोऽद्रिः । मिञ एत्ववचनमात्वबाधनार्थम् ॥

शृो नुं ह्रस्वश्च ॥ ११७ ॥

शृणातेः खलच्प्रत्ययो नुं ह्रस्वश्च भवति । शृङ्खला लोहरज्जुः । शृङ्खलः शृङ्खलं वा ॥

शमिकमिभ्यां बलच् ॥ ११८ ॥

आभ्यां बलच्प्रत्ययो भवति । शम्बलं पाथेयम् । कम्बलः प्रावारः ॥

ड्डकुटिकशिशालिभ्यः कमलच् ॥ ११९ ॥

एभ्यः कमलच्प्रत्ययो भवति । ड्डमलं जलम् । कुड्मलं मुकुलम् । कश्मलो मलिनः । शाल्मलो वृक्षविशेषः ॥

ईतेः शलक् ॥ १२० ॥

ईतेः शलक्प्रत्ययो भवति । ईशलो गोमान् ॥

शीङो वलञ्वालनौ ॥ १२१ ॥

शीङो वलञ्वालनौ प्रत्ययौ भवतः । शैवलमवका । शेवालं तदेव ॥

तुल्वलेल्वलपल्वलादयः ॥ १२२ ॥

---

१. 'त' ख. पाठः. २. 'को', ३. 'च', ४., ५. 'पतेः सलक्', ६. 'पस्सलो', ७., ८. 'वौ', ९. 'वै' ग पाठः.

एते शब्दा वलच्प्रत्ययान्ता निपात्यन्ते । तुलीलिपलीनां णिलुक् च । तुल्वलः ऋषिः । यस्य तौल्वलिः पुत्रः । इल्वलः असुरः । योऽगस्त्यजग्धः । इल्वलास्तिस्रो मृगशिरश्शिरस्तारा: । पल्वलं जलाशयः । आदिग्रहणाद् शाल्वलादयो भवन्ति ॥

शृसृहूसिभ्यो वः ॥ १२३ ॥

एभ्यो वप्रत्ययो भवति । शर्वः शिवः । सर्वः स एव । सर्वनाम च कृत्स्नार्थे । ह्रस्वो लघुः ॥

उर्देर्धश्च ॥ १२४ ॥

'उर्द माने' इत्यस्माद् धातोर्वप्रत्ययो धकारश्चान्तादेशो भवति । ऊर्ध्वः ऊर्ध्ववर्ष्मा । ऊर्ध्वः उपरि । ऊर्ध्वं पुरस्तात् ॥

गन्धेररक् च ॥ १२५ ॥

गन्धेर्वप्रत्ययः अरक् चागमो भवति । गन्धर्वो देवविशेषः ॥

इण्शीश्याशालापदिभ्यो नित् ॥ १२६ ॥

एभ्यो वप्रत्ययो निद् भवति । एवः केवलः । शेवः सुखकृत् । श्यावो वर्णः । शावः अर्भकः । लावः पक्षी । पद्वः वायुः ॥

इष्वनिघृष्वरिष्वलिष्वादयः ॥ १२७ ॥

एते शब्दा वप्रत्ययान्ता निपात्यन्ते । इषिघृषिरिषीणां किच्च । इष्व आचार्यः । निघृष्वः निकर्षः । रिष्वः हिंस्रः । लषेरिच्चोपधायाः । लिष्वो लम्पटः । आदिग्रहणाद् वृष्वादयो भवन्ति ॥

अशूस्रुप्रुषिलटिखटिकाणिकिणिविशिबिलिनलिशलिखलिभ्यः क्वन् ॥ १२८ ॥

एभ्यः क्वन्प्रत्ययो भवति । अश्वस्तुरगः । स्रुवः हवनभाण्डम् । प्रुष्वो निवृत्तिः जलचरश्च । लट्वा क्षुद्रचटका । खट्वा शय्या । काण्वो मुनिः पापं च । किण्वं सुराबीजम् । विश्वं जगत् सर्वनाम च । बिल्वः मालूरः । नल्वो भूमानविशेषः । शल्वाः क्षत्रियाः । खल्वा दृतिः । खल्वं निम्नम् ॥

---

१, 'क्रमुप्र', २. 'प्वः' क. पाठः.

शीङापोर्ह्रस्वश्च ॥ १२९ ॥

आभ्यां क्वन्प्रत्ययो ह्रस्वश्च भवति । शिवः शम्भुः । शिवा हरीतकी । अप्वो देवायुधः ॥

यसेर्ह च ॥ १३० ॥

यसेः क्वन्प्रत्ययो हश्चान्तादेशो भवति । यह्वा बुद्धिः ॥

लिहेर्जिह च ॥ १३१ ॥

लिहेः क्वन्प्रत्ययो जिह चादेशो भवति । जिह्वा रसना ॥

नञि भुवो डित् ॥ १३२ ॥

भवतेर्नञ्युपपदे क्वन्प्रत्ययो डिद् भवति । अभ्वम् अद्भुतम् ॥

कुटिकि[२]तिपणिपेलपल्लि[३]वल्लिमालिभ्योऽवक् ॥ १३३ ॥

एभ्योऽवक्प्रत्ययो भवति । कुटवः मानम् । कितवो धूर्तः । पणवो वाद्यम् । पेलवस्तनुः । पल्लवः किसलयम् । वल्लवो गोपः । मालवा जनपदः ॥

कैरवभैरवकारण्डवादीनवादयः ॥ १३४ ॥

कैरवादयः शब्दा अवक्प्रत्ययान्ता निपात्यन्ते । कृभृञोः कैरभैरौ च । कैरवं कुमुदम् । भैरवः भर्गः भयानकं च । कृञोऽण्डुक् वृद्धिश्च । कारण्डवो जलपक्षी । आङि दीङो नुक् च । आदीनवो दोषः । आदिग्रहणात् कोद्रवकोटवबडवादयो भवन्ति ॥

शृणातेरावः ॥ १३५ ॥

शृणातेरावप्रत्ययो भवति । शरावो वर्धमानकः ॥

प्रथेः षिवन् पृथ च ॥ १३६ ॥

प्रथेः षिवन्प्रत्ययः पृथ चादेशो भवति । पृथिवी भूः ॥

अमेरीवः ॥ १३७ ॥

अमेरीवप्रत्ययो भवति । अमीवा बुभुक्षा ॥

---

१. 'वयूथः ॥', २. 'डि' ग. पाठः. ३. 'णि' क. पाठः. ४. 'ड' ग. पाठः. ५. 'ण', ६. 'वं गर्भ भ' क. पाठः. ७. 'ऋ' ग. पाठः

ग्रसेर्डित् ॥ १३८ ॥

ग्रसेरीवप्रत्ययो डिद् भवति । ग्रीवा कन्धरा ॥

कुदापाभ्यः शः ॥ १३९ ॥

एभ्यः शप्रत्ययो भवति । कोशः सारः कुट्मलं च । दाशः कैवर्तः । पाशः वन्धनः ॥

वृभृवम्यामिकुभ्यः शक् ॥ १४० ॥

एभ्यः शक्प्रत्ययो भवति । वृशं शृङ्गबेरम् । भृशमत्यर्थम् । वंशो वेणुः अन्ववायश्च । वंशो भागः । कुशो दर्भः ॥

कलेरशच् ॥ १४१ ॥

कलेरशच्प्रत्ययो भवति । कलशः कुम्भः ॥

इणस्तुट् च ॥ १४२ ॥

इणः अशच्प्रत्ययस्तुट् चागमो भवति । एतशोऽश्वः मुनिश्च ॥

पलेराशच् ॥ १४३ ॥

पलेराशच्प्रत्ययो भवति । पलाशः ब्रह्मवृक्षः ॥

कनेरी चातः ॥ १४४ ॥

कनेराशच्प्रत्ययः अकारस्य च ईकारो भवति । कीनाशो यमः कृपणश्च ॥

कणिकुलिपंलिबडिभ्यः किशच् ॥ १४५ ॥

एभ्यः किशच्प्रत्ययो भवति । कणिशं सस्यमञ्जरी । कुलिशं वज्रम् । पंलिशं यत्र स्थित्वा मृगा व्यापाद्यन्ते । बडिशं मत्स्यग्रहणम् ॥

तिनिशेतिशबालिशादयः ॥ १४६ ॥

एते शब्दाः किशच्प्रत्ययान्ता निपात्यन्ते । तनोतेरिच्चातः । तिनिशः वृक्षः । एतेस्तुक् । इतिशो मुनिः । बलेर्वृद्धिश्च । बालिशो मूर्खः ॥

---

१. 'व' ग. पाठः. २. 'शः पर्वम' क. पाठः. ३. 'व' ग. पाठः.

अर्त्तेः पिशन् ॥ १४७ ॥

अर्त्तेः पिशन्प्रत्ययो भवति । अर्पिशम् अग्रमांसम् ॥

अङ्किमस्जिभ्यामुशच् ॥ १४८ ॥

आभ्यामुशच्प्रत्ययो भवति । अङ्कुशः सृणिः । म(श्गुं[1] ? श्जु)शो नकुलः ॥

युमाभ्यां षः ॥ १४९ ॥

आभ्यां षप्रत्ययो भवति । योषा स्त्री । माषो धान्यविशेषः हेमपरिमाणं च ॥

स्नुमूभ्यां कित् ॥ १५० ॥

आभ्यां षप्रत्ययः किद् भवति । स्नुषा पुत्रवधूः । मूषा हेमावपनादिः ॥

कलेर्मषक् ॥ १५१ ॥

कलेर्मषक्प्रत्ययो भवति । कल्मषं पापम् ॥

कुलेश्च माषक् ॥ १५२ ॥

कुलेश्चकारात् कलेश्च माषक्प्रत्ययो भवति । कुल्माषः अर्धस्विन्नमाषादिः । कल्माषो वर्णः ॥

जलेराषः ॥ १५३ ॥

जलेराषप्रत्ययो भवति । जलाषं जलम् ॥

अविमह्योष्टिषच् ॥ १५४ ॥

आभ्यां टिषच्प्रत्ययो भवति । अविषः समुद्रः । अविषी गङ्गा । महिषः सैरिभः । महिषी राजपत्नी ॥

रुहेर्वृद्धिश्च ॥ १५५ ॥

रुहेष्टिषच्प्रत्ययो वृद्धिश्च भवति । रौहिषं तृणजातिः । रौहिषी दूर्वा ॥

तवेर्णिद्वा ॥ १५६ ॥

तवेष्टिषच्प्रत्ययो णिद्वा भवति । तविषं बलम् । ताविषं तदेव ॥

---

१. 'सृ', ख. पाठः. २. 'ङ्कु' क. पाठः.

नञि व्यथेः ॥ १५७ ॥

नञ्युपपदे व्यथेष्टिषच्प्रत्ययो भवति । अव्यथिषः सूर्यः । अव्यथिषी पृथिवी ॥

कलेर्वुगिच्चोपधायाः ॥ १५८ ॥

कलेष्टिषच्प्रत्ययो वुगागम उपधायाश्चेकारो भवति । किल्बिषं पापम् ॥

कॄतॄभ्यामीषन् ॥ १५९ ॥

आभ्यामीषन्प्रत्ययो भवति । करीषः शुष्कगोमयरजः । तरीषः प्लवः ॥

ऋजिशॄपॄभ्यः कित् ॥ १६० ॥

ऋज्यादिभ्य ईषन्प्रत्ययः किद् भवति । ऋजीषः अवस्करः । शिरीषः वृक्षः । पुरीषं शकृत् ॥

उषेर्नक् च ॥ १६१ ॥

उषेरीषन्प्रत्ययो नक् चागमो भवति । उष्णीषं मुकुटः शिरोवेष्टनं च ॥

अमेर्वरक् च ॥ १६२ ॥

अमेरीषन्प्रत्ययो वरक् चागमो भवति । अम्बरीषं भ्राष्ट्रम् ॥

ऋपॄकल्पिहविनाहिकालिभ्य उषन् ॥ १६३ ॥

एभ्य उषन्प्रत्ययो भवति । अरुषः व्रणः । परुषः कलुषः । कल्पुषः क्रियानुगुणः । हवुषा ओषधिः । नहुषो राजा । कलुषः अस्वच्छः ॥

पुरः किच्च ॥ १६४ ॥

पिपर्त्तेरुषन्प्रत्ययः किच्च भवति । पुरुषः मनुष्यः ॥

जॄपॄकॄमञ्जिपीयिहन्यङ्गिगण्डिभ्य ऊषन् ॥ १६५ ॥

एभ्य ऊषन्प्रत्ययो भवति । जरूषः आदित्यः । परूषः वृक्षविशेषः । करूषः । मञ्जूषा काष्ठं कोष्ठं च । पीयूषममृतम् । हनूषो राक्षसः । अङ्गूषो बाणः । गण्डूषो द्रवकवलः ॥

यूषशूषार्कलूषकारूषकोरदूषाटरूषशैलूषादयः ॥ १६६ ॥

यूषादयः शब्दा ऊषन्प्रत्ययान्ता निपात्यन्ते । युशुवोर्डिच्च । यूषः पेयविशेषः । शूषः शेषः बलम् । अर्केर्लुट् च । अर्कलूषः ऋषिः । कृञो वृद्धिश्च । कारूषा जनपदः । कुरेरदुक् च । कोरदूषः कोद्रवः । आटेररद् च । आटरूषः वाशा । शलेरैत्वातः । शैलूषः नटः । आदिग्रहणाद् दूषप्रत्यूषाभ्यूषादयो भवन्ति ॥

कश्यशिपचिमुचियजिहनिकमिवादिवामान्माभ्यः सः ॥ १६७ ॥

एभ्यः सप्रत्ययो भवति । कक्षः गहनं शरीरावयवश्च । अक्षो विभीतकादेः इन्द्रियं च । पक्षः अर्धमासः । प(क्षः ? क्षी) विहङ्गः गौश्च । मोक्षः अपवर्गः । यक्षः गुह्यकः । हंसो मरालः सूर्यश्च । कंसः हिरण्यं मानम् असुरश्च । वत्सः तर्णको मुनिः जनपदश्च । वासा आटरूपकः । मांसं पिशितम् । मासश्चैत्रादिः ॥

प्लुषेरच्चोपधायाः ॥ १६८ ॥

प्लुषेः सप्रत्ययः उपधायाश्चाकारो भवति । प्लक्षो वृक्षविशेषः ॥

ऋषिरिचिक्रुतिव्रश्चिशॄगृधिभ्यः कित्[1] ॥ १६९ ॥

एभ्यः सप्रत्ययः किद् भवति । ऋक्षं नक्षत्रम् । कपिरिकादित्वा[2]ल्लत्वेन लिक्षा । क्रुत्सः मुनिः । वृक्षः पादपः । शीर्षं शिरः । गृत्सः गृध्नुः ॥

अमेर्नित् ॥ १७० ॥

अमेः सप्रत्ययो निद् भवति । अंसः बाहुमूर्धा ॥

उन्देर्नलोपश्च ॥ १७१ ॥

'उन्दी क्लेदने' इत्यस्माद् धातोः सप्रत्ययो नित् नकारलोपश्चास्य भवति । उत्सः जलम् ॥

---

१. 'चिक्र' ख., 'चिरि' ग. पाठः। २. 'वि' क. पाठः।

पन्यल्यविरधिरभिचमिचट्यातितमियुभ्योऽसच् ॥ १७२ ॥

एभ्योऽसच्प्रत्ययो भवति । पनसो वृक्षविशेषः । अलसोऽनुद्यमः । अवसं पाथेयम् । रथसोऽन्धजातिः । रभस उद्धर्षः । चमसः सोमपात्रम् । चटसः चर्मपुटः । अतसी धान्यविशेषः । तमसा नाम नदी । यवसः अश्वादिघासः ॥

वेतसतामरससारसादयः ॥ १७३ ॥

एते शब्दा असच्प्रत्ययान्ता निपात्यन्ते । वियस्तुद् च । वेतसो वानीरः । तमेररद् वृद्धिश्च । तामरसं पद्मम् । सर्त्तेर्णिच्च । सारसः पक्षिविशेषः । आदिग्रहणात् उरसपुल्कसादयो भवन्ति ॥

पीङो नसक् ॥ १७४ ॥

पीङो नसक्प्रत्ययो भवति । पीनसः श्लेष्मव्याधिः ॥

कृपियुवलिभ्य आसः ॥ १७५ ॥

एभ्य आसप्रत्ययो भवति । कल्पासः पित्तप्रकृतिः । यवासः दुरालभा । वलासः श्लेष्मा ॥

किलेः कित् ॥ १७६ ॥

किलेरासप्रत्ययः किद् भवति । किलासं सिध्मम् । किलासि[१] पाकखर्परेषु ॥

कुरः पासः ॥ १७७ ॥

'कुर शब्द' इत्यस्माद् धातोः पासप्रत्ययो भवति । कूर्पासः कञ्चुकः ॥

पटिविभ्यां टिसजूडिसचौ ॥ १७८ ॥

आभ्यां टिसज्डिसचौ प्रत्ययौ भवतः । पट्टिसमायुधविशेषः । बिसं मृणालम् ॥

तालेरीसच् ॥ १७९ ॥

तालेरीसच्प्रत्ययो भवति । तालीसं गन्धद्रव्यम् ॥

---

१. 'सी', २. 'टम्' ग. पाठः.

त्रपेरुसच् ॥ १८० ॥

त्रपेरुसच्प्रत्ययो भवति । त्रपुसी कर्कटिका । विधानसामर्थ्यात् षत्वं न भवति ॥

अलेरम्बुसः ॥ १८१ ॥

अलेरम्बुसप्रत्ययो भवति। अलम्बुसो यातुधानः । अलम्बुषा नाम ओषधिः ॥

लूञो हः ॥ १८२ ॥

लूञो हप्रत्ययो भवति। लोहं सुवर्णादि ॥

हिंसेः कित् सिं च ॥ १८३ ॥

हिंसेर्हप्रत्ययः कित् सिं चास्यादेशो भवति। सिंहः मृगराजः ॥

कलेरहः ॥ १८४ ॥

कलेरहप्रत्ययो भवति। कलहो युद्धम् ॥

अनेरोकहः ॥ १८५ ॥

अनेरोकहप्रत्ययो भवति। अनोकहो वृक्षः ॥

कटेराहः ॥ १८६ ॥

कटेराहप्रत्ययो भवति। कटाहो लोहादिपात्रम् ॥

निरीण ऊहक् ॥ १८७ ॥

यूणो निर्युपपदे ऊहक्प्रत्ययो भवति। निर्यूहः सौधादिकाष्ठानिर्गमः ॥

दस्त्यूहः ॥ १८८ ॥

दस्त्यूहप्रत्ययो भवति। दात्यूहः पक्षिविशेषः ॥

वलेरक्षन् ॥ १८९ ॥

वलेरक्षन्प्रत्ययो भवति । वलक्षः शुक्लः ॥

## लाक्षाद्राक्षामिक्षादयः ॥ १९० ॥

लाक्षादयः शब्दा अक्षन्प्रत्ययान्ता निपात्यन्ते । लसेरा च । लाक्षा जतु । रसेर्दुट् च । द्राक्षा मृद्वीका । आङि मृजेष्टिलोपः प्रत्ययादेरिच्च । आमिक्षा हविर्विशेषः । आदिग्रहणात् चोक्षपीयुक्षादयो भवन्ति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां द्वितीयस्याध्यायस्य तृतीयः पादः ॥

---

## अथ चतुर्थः पादः ।

## उणादयो भूतेऽपि ॥ १ ॥

उणादयः प्रत्ययाः क्रियायां वर्तमानेऽनुक्रान्तास्तेषां केचित् भूतेऽपि भवन्ति ॥

## सर्वधातुभ्यो मनिन् ॥ २ ॥

भसितं[1] तत् भस्म । अद्भ्यः सरन्ति स्म अप्सरसः । एवमन्येऽपि प्रयोगतोऽवगन्तव्याः ॥

## भविष्यति गम्यादयः ॥ ३ ॥

गम्यादयः शब्दा भविष्यति काले साधवो भवन्ति । अनेन प्रत्ययस्य भविष्यत्कालता विधीयते । ग्रामं गमी ग्रामं गामी भावी । प्रस्थायी । प्रयायी । प्रतियायी । प्रबोधी । प्रतिबोधी ॥

## यावत्पुरानिपातयोर्लट् ॥ ४ ॥

यावत् पुरा इत्येतयोर्निपातयोरुपपदयोः भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लट्प्रत्ययो भवति । यावद् भुङ्क्ते । पुरा व्रजति । भविष्यदनद्यतनेऽपि पूर्वविप्रतिषेधाल्लडेव । यावत् श्वो भुङ्क्ते । पुरा श्वो व्रजति । निपातयोरिति किम् । यावद् दास्यति तावद् भोक्ष्यते । पुरा हेतुभूतया व्रजिष्यति ॥

---

१. 'तं भ', २. 'नु' ग. पाठः.

कदाकर्ह्योर्वा ॥ ५ ॥

कदा कर्हि इत्येतयोरुपपदयोर्भविष्यत्कालार्थाद् धातोः लट्प्रत्ययो वा भवति । कदा भुङ्क्ते । कर्हि भुङ्क्ते वा । कदा भोक्ष्यते । कर्हि भोक्ष्यते । कदा भोक्ता । कर्हि भोक्ता । भूते तु नित्यमेव लिडादयः । कदा बुभुजे । कर्हि बुभुजे इत्यादि ॥

किंवृत्ते लिप्सायाम् ॥ ६ ॥

किमो वृत्तं किंवृत्तम् । तेन किमित्येतद्विभक्त्यन्तं डतरान्तं डतमान्तं च गृह्यते । तस्मिन् किंवृत्त उपपदे लिप्सायां गम्यमानायां भविष्यत्कालार्थाद् धातोर्लट्प्रत्ययो वा भवति । कं भवन्तो भोजयन्ति । कं भवन्तो भोजयिष्यन्ति । कं भवन्तो भोजयितारः । कतरो भिक्षां ददाति दाता दास्यति वा । कतमो भिक्षां ददाति दाता दास्यति वा । लब्धुकामः पृच्छति । लिप्सायामिति किम् । कः पाटलिपुत्रं गमिष्यति ॥

लिप्स्यमानसिद्धौ च ॥ ७ ॥

अकिंवृत्तार्थ आरम्भः । लिप्स्यमानात् सिद्धिर्लिप्स्यमानसिद्धिः । तस्यां गम्यमानायां भविष्यत्कालार्थाद् धातोर्लट्प्रत्ययो वा भवति । यो भक्तं ददाति स स्वर्गं याति । यो भक्तं दास्यति स स्वर्गं यास्यति । यो भक्तं दाता स स्वर्गं गन्ता । लिप्स्यमानाद् भक्तात् स्वर्गसिद्धिमाचक्षाणो दातारं प्रोत्साहयति ॥

लोडर्थलक्षणे च ॥ ८ ॥

लोडर्थः प्रैषादिः, तल्लक्षणे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लट्प्रत्ययो वा भवति । उपाध्यायश्चेदागच्छति अथ त्वं छन्दोऽधीष्व । उपाध्यायश्चेदागमिष्यति अथ त्वं व्याकरणमधीष्व । उपाध्यायश्चेदागन्ता अथ त्वं मीमांसामधीष्व । अत्रोपाध्यायागमनम् अध्ययने प्रैषस्यातिसर्गस्य प्राप्तकालतायाश्च लक्षणं भवति ॥

लिङ् चोर्ध्वमौहूर्त्तिके ॥ ९ ॥

ऊर्ध्वं मुहूर्ताद् भवे भविष्यत्कालविशिष्टे लोडर्थलक्षणेऽर्थे वर्तमानाद् धातोर्लिङ्प्रत्ययो भवति लट् च वा। ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति आगन्ता वा अथ त्वं छन्दो व्याकरणं निरुक्तं मीमांसां चाधीष्व इति ॥

माङि लुङ् ॥ १० ॥

माङ्युपपदे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लुङ्प्रत्ययो भवति। मा कार्षीत्। ङकारः किम्। मा भवतु तस्य पापम् ॥

स्मपरे लङ् च ॥ ११ ॥

स्मोत्तरे माङ्युपपदे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लङ्प्रत्ययो भवति चकाराल्लुङ् च। मा स्म करोत्। मा स्म कार्षीत् ॥

अनद्यतने लुट् ॥ १२ ॥

अनद्यतनभविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लुट्प्रत्ययो भवति। कर्ता ॥

परिदेवने च ॥ १३ ॥

परिदेवनमनुशोचनम्। तस्मिन् गम्यमाने भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लुट्प्रत्ययो भवति। अद्यतनार्थ आरम्भः। इयं नु कदा गन्ता या एवं पादौ निदधाति। अयं नु कदाध्येता य एवमनभियुक्तः ॥

न[1] व्यामिश्रे ॥ १४ ॥

अद्यतनानद्यतनव्यामिश्रे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लुट्प्रत्ययो न भवति। अद्य श्वो वा गमिष्यति ॥

लृट् ॥ १५ ॥

भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्लृट्प्रत्ययो भवति। गमिष्यति। भोक्ष्यते ॥

शतृशानचौ चास्य लङ्वत् ॥ १६ ॥

---

१. 'अव्यामि' क. पाठः.

अद्यतनभविष्यत्कालविहितस्य (लः ? लटः) शतृशानचावादेशौ लट इव भवतः । पक्ष्यन्तं पश्य । पक्ष्यमाणं पश्य । हे पक्ष्यन् ! । हे पक्ष्यमाण ! । एवं लक्षणादिष्वपि । अस्येति किम् । स्मरसि देवदत्त ! कश्मीरेषु वत्स्यामः, तत्रौदनं भोक्ष्यामहे ॥

क्रियायां च क्रियार्थायाम् ॥ १७ ॥

क्रियार्थायां च क्रियायाम् उपपदे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्ल्टृप्रत्ययो भवति । शतृशानचौ चास्य लट इव भवतः । पक्ष्यामीति व्रजति । पक्ष्यन् व्रजति । भोक्ष्य इति व्रजति । भोक्ष्यमाणो व्रजति । वक्ष्यमाणेन ण्वुला समावेशो यथा स्यादिति वचनम् ॥

ण्वुल् च ॥ १८ ॥

क्रियायां क्रियार्थायामुपपदे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्ण्वुल् च प्रत्ययो भवति । पाचको व्रजति । भोजको व्रजति । क्रियायामिति किम् । भिक्षिष्य इत्यस्य जटा(म् ?) । क्रियार्थायामिति किम् । धावतस्ते पतिष्यति वासः । अत्र हि धावनक्रियोपपदं, न त्वसौ पतनार्थमुपात्तेति न भवति । 'कर्तरि ण्वुल्तृचौ' इति सामान्येन सिद्धे क्रियार्थोपपदेन बाधो मा भूदिति वचनम् । ननु वासरूपविधिना ण्वुलपि भविष्यति । एवं तर्हि वासरूपविधिना तृजादयो मा भूवन्निति पुनर्ण्वुल् विधीयते । तेन पक्ता व्रजति विक्षिपो व्रजति इत्यादिर्न भवति ॥

कर्मणि चाण् ॥ १९ ॥

क्रियायां क्रियार्थायां कर्मणि चोपपदे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोरण्प्रत्ययो भवति । काण्डलावो व्रजति । धान्यमायो व्रजति । पुनर्विधानात् कादीनपि बाधते । गोदायो व्रजति । बहुलाधिकारात् ण्वुलपि । कटंकारकी व्रजति ॥

तुमुन् भावे ॥ २० ॥

क्रियायां क्रियार्थायामुपपदभूतायां भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्भावे तुमुन्प्रत्ययो भवति । भावो धात्वर्थः । पक्तुं व्रजति ॥

भाववचनाश्च ॥ २१ ॥

भाववचना घञ्क्तिनादयः । ते क्रियायां क्रियार्थायामुपपदे भविष्यत्कालविशिष्टेऽर्थे वर्तमानाद् धातोर्भावे भवन्ति । यदि भाववचनाः, किमर्थं भावे विधीयन्ते । क्रियार्थोपपदेन तुमुना मा बाधिषतेति । पाकाय व्रजति । पचनाय व्रजति । पाचनायै व्रजति । वचनग्रहणाद् यो यथा विहितः सः तथा भवति ॥

घञ् ॥ २२ ॥

क्रियायां क्रियार्थायामिति निवृत्तम् । सर्वेभ्यो धातुभ्यो भावे घञ्प्रत्ययो भवति । पाकः । त्यागः । घकारो (वि)त्त्वार्थः । ञकारो वृद्धिस्वरार्थः ॥

पदरुजिविशिभ्यः कर्तरि ॥ २३ ॥

पदादिभ्यो धातुभ्यः कर्तरि घञ्प्रत्ययो भवति । पद्यत इति पादः । रोगः । वेशः ॥

स्पृशेरुपतापे ॥ २४ ॥

स्पृशेर्धातोरुपतापे कर्तरि घञ्प्रत्ययो भवति । स्पर्शो व्याधिः । उपताप इति किम् । स्पृशो देवदत्तः ॥

दॄजॄभ्यां णिलुक् च ॥ २५ ॥

आभ्यां ण्यन्ताभ्यां कर्तरि घञ्प्रत्ययो णिलुक् च भवति । दारयन्तीति दाराः । जरयतीति (जरा ? जारः) ॥

सर्त्तेः स्थिरव्याधिबलमत्स्येषु ॥ २६ ॥

सर्त्तेर्धातोः स्थिरादिषु कर्तृषु घञ्प्रत्ययो भवति । सारः स्थिरोऽर्थः । अतिसारो व्याधिः । सारो बलम् । विसारो मत्स्यः ॥

अकर्त्तरि कारके च संज्ञायाम् ॥ २७ ॥

संज्ञायां विषये धातो कर्तृवर्जिते कारके घञ्प्रत्ययो भवति । क्रियत इति कारः । प्रास्यत इति प्रासः । दशन्ति तस्मै दाशः । आहर(र)न्ति तस्मादित्याहारः । करणाधिकरणयोर्ल्युटं तदपवादं च हलन्तेभ्यो घञं वक्ष्यति । अकर्तरीति किम् । मिषतीति मेषः । संज्ञायामिति

किम् । कर्तव्यः कटः । बहुलाधिकारादसंज्ञायामपि (का? घञा)दयो भवन्ति। (को दायो भवता) दत्तः। (को) लाभो भवता लब्धः इति । चकार उत्तरत्र भावानुकर्षणार्थः ॥

सङ्ख्यातात् परिमाणाख्यायाम् ॥ २८ ॥

सङ्ख्यायाः परिमितेऽर्थे वर्तमानाद् धातोः परिमाणाख्यायां भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । एकस्तण्डुलनिश्चायः। द्वौ शूर्पनिष्पावौ। बहुलाधिकारा(वचना?)दपरिमाणाख्यायामपि । द्वौ कारौ । परिमाणाख्यायामिति किम् । एको निश्चायः । अजपोरेवायमपवादः । क्तिनादिभिस्तु बाध्यते । एका तिलोच्छ्रितिः । द्वे सूती ॥

इङश्च ॥ २९ ॥

इङो भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अध्ययनमध्यायः । अधीयत इत्यध्यायः ॥

अपादाने षिद्वा ॥ ३० ॥

इङो घञ्प्रत्ययोऽपादाने षिद्वा भवति । उपेत्याधीयतेऽस्मादिति उपाध्यायः । षिद्विधानसामर्थ्यात् स्त्रियां क्तिनं बाधते । उपाध्यायी उपाध्याया ॥

शॄणातेर्वायुवर्णनिवृतावरणेषु ॥ ३१ ॥

शॄ इत्यस्माद् धातोर्वाय्वादिष्वर्थेषु घञ्प्रत्ययो भवति। शारो वायुः । शारो वर्णः । शाराः द्यूतोपकरणं, नियमेन वृता इति निवृता उच्यन्ते । निशार आवरणम् । एतेष्विति किम् । शरः ॥

युजेः कालहलाङ्गयुग्मेषु कित् ॥ ३२ ॥

युजेर्धातोः काले हलाङ्गे युग्मे चाभिधेये घञ्प्रत्ययः किद् भवति । युगं कृतत्रेतादि । युगं (हलाङ्गम्) । उपलक्षणं चैतत्। तेन रथाङ्गेऽपि भवति । युगं युग्मम् ॥

उपसर्गे रुवः ॥ ३३ ॥

रौतेर्धातोरुपसर्ग उपपदे भावे अकर्तरि (च) कारके घञ्प्रत्ययो भवति । अपोऽपवादः । संरावः । उपसर्ग इति किम् । रवः ॥

वौ क्षुश्रुवः ॥ ३४ ॥

वावुपपदे क्षु श्रु इत्येताभ्यां भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । विक्षावः । विश्रावः ॥

समि युद्रुदुवः ॥ ३५ ॥

सम्युपपदे युद्रुदुभ्यो भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । संयावः । सन्दावः । सन्द्रावः । समीति किम् । विद्रवः ॥

अनुपसर्गाद्वा ॥ ३६ ॥

अनुपसर्गेभ्यो युप्रभृतिभ्यो वा घञ्प्रत्ययो भवति । यवः यावः । दवः दावः । द्रवः द्रावः ॥

व्यनुप्रेषु च भुवः ॥ ३७ ॥

व्यनुप्रेषूपपदेषु (भुवः) भावे अकर्तरि च कारके वा घञ्प्रत्ययो भवति । विभावः विभवः । अनुभावः अनुभवः । प्रभावः प्रभवः । एतेष्विति किम् । सम्भवः ॥

उदि च नियः ॥ ३८ ॥

नियोऽनुपसर्गाद् उदि चोपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो वा भवति । नायः नयः । उन्नायः (उन्नयः) ॥

अवे[1] ॥ ३९ ॥

अवे उपपदे नयतेः भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अचोऽपवादः । अवनायः ॥

परौ द्यूते ॥ ४० ॥

नयतेः परावुपपदे द्यूतविषये (प्रतियार्थे?) भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अचोऽपवादः । परिणायेन शा(री ? रा)न् हन्ति । द्यूत इति किम् । परिणयः ॥

---

1. 'वे नयतेः' क. पाठः.

## प्रे द्रुस्तुभ्याम् ॥ ४१ ॥

द्रुस्तुभ्यां प्र उपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । प्रद्रावः । प्रस्तावः । प्र इति किम् । (द्रवः ।) स्तवः ॥

## स्रुवोऽनुपसर्गाच्च ॥ ४२ ॥

स्रवतेरनुपसर्गात् प्रे चोपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । स्रावः । प्रस्रावः ॥

## श्रियः ॥ ४३ ॥

श्रयतेरनुपसर्गात् भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अचोऽपवादः । श्रायः । अनुपसर्गादिति किम् । प्रश्रयः ॥

## उदि वा ॥ ४४ ॥

श्रयतेर्धातोरुद्युपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो वा भवति । उच्छ्रायः उच्छ्रयः ॥

## निरभ्योः पूल्वोभ्याम् ॥ ४५ ॥

पूल्वोभ्यां यथासंख्यं निरभ्योरुपपदयोर्भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । निष्पावः । अभिलावः ॥

## उन्न्योर्ग्रः ॥ ४६ ॥

गिरतेर्गृणातेर्वा उन्न्योरुपपदयोर्भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । उद्गारः । निगारः ॥

## किरो धान्ये ॥ ४७ ॥

कॄधातोर्धान्यविषयेऽर्थे वर्तमानादुन्न्योरुपपदयोर्भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । उत्कारो व्रीहीणाम् । (निकारो व्रीहीणाम् ।) धान्य इति किम् । पुष्पोत्करः शरनिकरः ॥

## नौ वृञः ॥ ४८ ॥

वृणोतेर्धातोर्धान्यविषयेऽर्थे वर्तमानाद् नावुपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । नीवारा नाम व्रीहयः । धान्य इति किम् । निवरा कन्या ॥

यज्ञे समि स्तुवः ॥ ४९ ॥

स्तौतेः सम्युपपदे यज्ञविषये घञ्प्रत्ययो भवति । समेत्य स्तुवन्त्यस्मिन्निति संस्तावो यज्ञभूम्येकदेशः । यज्ञ इति किम् । संस्तवश्छात्रयोः ॥

प्रे स्त्रोऽन्यत्र ॥ ५० ॥

स्तृणातेः प्र उपपदे यज्ञादन्यत्र प्रयोजने भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । प्रस्तारः । यज्ञादन्यत्रेति किम् । प्रस्तरं प्रहरति ॥

प्रथने वावशब्दे ॥ ५१ ॥

स्तृणातेर्वावुपपदे अशब्दविषये प्रथने अभिधेये घञ्प्रत्ययो भवति । विस्तारः पटस्य । प्रथन इति किम् । (तृण)विस्तरः । अशब्द इति किम् । वाक्यविस्तरः ॥

छन्दोनाम्नि च ॥ ५२ ॥

स्तृणातेश्छन्दोनामविषये च घञ्प्रत्ययो भवति । विष्टारपङ्क्तिः । सविस्तारपङ्क्तिः । आस्तारपङ्क्तिः ॥

अवे च ॥ ५३ ॥

स्तृणातेरवे चोपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अवस्तारः ॥

त्रो वा ॥ ५४ ॥

तरतेरवे उपपदे भावे अकर्तरि च कारके घञ्प्रत्ययो वा भवति । अवतारः अवतरः । कथं नद्युत्तारः । बहुलाधिकारात् ॥

इणो नावभ्रेषे ॥ ५५ ॥

एतेर्धातोर्नावुपपदे अभ्रेषविषये भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । अचोऽपवादः । स्थितेरचलनमभ्रेषः । शास्त्रलोकप्रसिद्ध्यादिना नियतमयनं न्यायः । अभ्रेष इति किम् । न्ययं गता वपाः ॥

परावनुपात्यये ॥ ५६ ॥

इणो धातोः परावुपपदे अनुपात्ययेऽर्थे घञ्प्रत्ययो भवति । अनुपात्ययोऽवसरप्राप्तस्यानतिपातः क्रमः, परिपाटिरिति यावत् । पर्यायः । अनुपात्यय इति किम् । कालस्य पर्ययः । अन्यथाभवनमित्यर्थः ॥

व्युपयोः शीङः ॥ ५७ ॥

शेतेर्धातोर्व्युपयोरुपपदयोरनुपात्यये विषये भावेऽकर्तरि च कारके घञ्प्रत्ययो भवति । अचोऽपवादः । तव राजविशायः । मम राजोपशायः, राजोपस्थानविशेषः । पर्याय इति किम् । विशयः उपशयः ॥

प्रत्यासत्तौ चेरस्तेये ॥ ५८ ॥

चिनोतेः प्रत्यासत्तिविषयेऽर्थे वर्तमानादचौर्यविषये च भावेऽकर्तरि च कारके घञ्प्रत्ययो भवति । पुष्पप्रचायः । फलापचायः । प्रत्यासत्ताविति किम् । वृक्षस्याग्रे पुष्पप्रचयः । अस्तेय इति किम् । हस्तेन पुष्पप्रचयं करोति चोरः ॥

शरीरनिवासयोः कश्चादेः ॥ ५९ ॥

चिनोतेः शरीरनिवासयोर्घञ्प्रत्ययस्तत्सन्नियोगेन चादेः ककारादेशो भवति । कायः शरीरम् । निकायः निवासः ॥

चितौ च ॥ ६० ॥

चितौ च विषये चिनोतेर्घञ्प्रत्ययः कश्चादेरादेशो भवति । आकायमग्निं चिन्वीत ॥

राशौ वा ॥ ६१ ॥

राशिस्त ....वसस्तस्मिन्नर्थे चिनोतेर्घञ्प्रत्ययो भवति । ककारश्चादेरादेशो वा भवति । कायः काष्ठनिचयः ॥

सङ्घे चानौत्तराधर्ये ॥ ६२ ॥

सङ्घः प्राणिनां समुदायः । तस्मिन्नौत्तराधर्यवर्जितेऽभिधेये घञ्-प्रत्ययः ककारश्चादेरादेशो भवति । ब्राह्मणनिकायः । अनौत्तराधर्य इति किम् । सूकरनिचयः ॥

उदि ग्रुपूद्रुवः ॥ ६३ ॥

ग्रु पू द्रु इत्येतेभ्यो धातुभ्यः उद्युपपदे घञ्प्रत्ययो भवति । अपोऽपवादः । उद्ग्रावः । उत्पावः । उद्द्रावः ॥

ग्रहश्च ॥ ६४ ॥

उद्युपपदे ग्रहश्च भावेऽकर्तरि च कारके घञ्प्रत्ययो भवति । अपोऽपवादः । उद्ग्राहः ॥

न्यवयोराक्रोशे ॥ ६५ ॥

न्यवयोरुपपदयोराक्रोशे गम्यमाने ग्रहेर्भावेऽकर्तरि च कारके घञ्-प्रत्ययो भवति । निग्राहस्ते वृषल(ः?) । अवग्राहस्ते वृषल(ः?) । आक्रोश इति किम् । निग्रहश्चोरस्य । अवग्रहः पदस्य ॥

समि मुष्टौ ॥ ६६ ॥

ग्रहेः सम्युपपदे मुष्टिविषये(भ?)धात्वर्थे भावेऽकर्तरि च कारके घञ्-प्रत्ययो भवति । सङ्ग्राहो मल्लस्य । दृढमुष्टित्वमुच्यते । मुष्टाविति किम् । सङ्ग्रहो धान्यस्य ॥

परौ यज्ञे ॥ ६७ ॥

परावुपपदे यज्ञविषये भावे अकर्तरि च कारके घञ्प्रत्ययो भवति । पूर्वपरिग्राहः यज्ञः । यज्ञ इति किम् । परिग्रहो देवदत्तस्य ॥

प्रे लिप्सायाम् ॥ ६८ ॥

ग्रहेर्धातोः प्र उपपदे लिप्सायां भावेऽकर्तरि च कारके घञ्प्रत्ययो भवति । पात्रप्रग्राहेण चरति भिक्षुः । लिप्सायामिति किम् । पात्रप्रग्रहः ॥

वा वणिजाम् ॥ ६९ ॥

ग्रहेः प्र उपपदे वणिक्सम्बन्धिन्यभिधेये भावेऽकर्तरि च कारके घञ्प्रत्ययो वा भवति । तुलाप्रग्राहेण चरति, तुलाप्रग्रहेण चरति ॥

---

१. 'च: । कृञः श च' ख. पाठः.

रश्मौ च ॥ ७० ॥

ग्रहेः प्रे उपपदे रश्मावभिधेये घञ्प्रत्ययो वा भवति । प्रग्राहः प्रग्रहः ॥

अवे वर्षप्रतिबन्धे ॥ ७१ ॥

ग्रहेरवे उपपदे वर्षसम्बन्धिनि प्रतिबन्धेऽभिधेये घञ्प्रत्ययो वा भवति। अवग्राहो वर्षस्य । अवग्रहो वर्षस्य । वर्षप्रतिबन्ध इति किम् । अवग्रहः पदस्य ॥

आङि रुप्लुभ्याम् ॥ ७२ ॥

रुप्लुभ्यामाङ्युपपदे भावेऽकर्तरि च कारके घञ्प्रत्ययो वा भवति। आरावः आरवः। आप्लावः आप्लवः ॥

परौ भुवोऽवज्ञाने ॥ ७३ ॥

परावुपपदे भवतेर्धातोरवज्ञानेऽर्थे घञ्प्रत्ययो वा भवति । अवज्ञानमसत्कारपूर्वकोऽवक्षेपः । परिभावः परिभवः ॥

वृणोतेराच्छादने ॥ ७४ ॥

वृणोतेराच्छादनेऽर्थे वर्त्तमानाद् भावेऽकर्तरि च कारके घञ्प्रत्ययो वा भवति । प्रव्रियत इति प्रावारः प्रावरः आच्छादनविशेषोऽभिधीयते । आच्छादन इति किम् । प्रवरो गौः ॥

क्रियाभ्यावृत्तिसमयसमूहेषु च ॥ ७५ ॥

क्रियाभ्यावृत्त्यादिषु चार्थेषु वृणोतेर्घञ्प्रत्ययो भवति । पञ्च वारान् भुङ्क्ते । तवाद्य वारः । ममाद्य वारः । वारः समूहः । कथं परिवारः । ण्यन्तात् पचाद्यच् ॥

स्थास्नापाव्यधिहनियुधादिभ्यः कः ॥ ७६ ॥

स्थादिभ्यो भावेऽकर्तरि च कारके कप्रत्ययो भवति । प्रतिष्ठन्तेऽस्मिन्निति प्रस्थः । प्रस्नात्यस्मिन्निति प्रस्नः । प्रपिबन्त्यस्यामिति प्रपा ।

आविध्यन्त्यनेनेति आविधम् । विहन्यतेऽस्मिन्निति विघ्नः । आयुध्यतेऽनेनेत्यायुधम् । (आदिग्रहणात् ) आध्यायन्ति तामित्या(ध्य ? ढ्य) इत्यादयो भवन्ति । पृषोदरादित्वादुत्तरपदादेष्टुत्वम् ॥

एरच् ॥ ७७ ॥

इवर्णान्ताद् धातोर्भावेऽकर्तरि च कारके अच्प्रत्ययो भवति । घञोऽपवादः । चयः । जयः । नयः । क्रयः ॥

नपुंसके भीवृष्यादिभ्यः ॥ ७८ ॥

भी वृषी इत्यादिभ्यो भावे अकर्तरि च कारके नपुंसके अच्प्रत्ययो भवति । क्तल्युटोरपवादः । भयम् । वर्षम् । धनम् । वनम् । खलम् । पदमिति ॥

ॠदोरप् ॥ ७९ ॥

ॠकारान्तेभ्य उवर्णान्तेभ्यश्च धातुभ्यो भावेऽकर्तरि च कारके अप्प्रत्ययो भवति । घञोऽपवादः । करः । गरः । यवः । स्तवः । पकारः स्वरार्थः । तकारोऽसन्देहार्थः ॥

वृद्वशिनिश्चिरणिगमिग्रहः ॥ ८० ॥

वृञादिभ्यो भावेऽकर्तरि च कारकेऽप्प्रत्ययो भवति । घञोऽपवादः । वरः । आदरः । वशः । निश्चयः । रणः । गमः । ग्रहः ॥

अक्षेषु ग्लहः ॥ ८१ ॥

ग्रहेर्धातोरक्षविषये भावेऽकर्तरि च कारके अप्प्रत्ययो रस्य च लत्वं निपात्यते । गृह्यत इति ग्लहः ॥

अदेरुपसर्गे ॥ ८२ ॥

अदेर्धातोरुपसर्ग उपपदे भावेऽकर्तरि च कारके अप्प्रत्ययो भवति । घञोऽपवादः । प्रघसः विघसः । उपसर्ग इति किम् । घासः ॥

नौ ण च ॥ ८३ ॥

नावुपपदेऽदेर्धातोः भावेऽ तेरि च कारके णप्रत्ययो भवति । चकारादप् च । न्यादो निघसः ॥

व्यधिजपिभ्यामनुपसर्गे ॥ ८४ ॥

व्यधिजपिभ्यामनुपसर्गाभ्यां भावेऽकर्तरि च कारकेऽप्प्रत्ययो भवति। व्यधः। जपः। अनुपसर्ग इति किम्। आव्याधा उपजापा॥

*यमः समुपनिविषु च ॥ ८५ ॥

एषूपपदेषु च भावेऽकर्तरि च कारके अप्प्रत्ययो वा भवति। यमः यामः। संयमः संयाम। उपयमः उपयामः। नियमः नियामः। वियमः वियामः। एतेष्विति किम्। प्रयामः आयामः॥

नौ गदनदपठस्वनिभ्यः ॥ ८६ ॥

नावुपपदे गदादिभ्यो भावेऽकर्तरि च कारके अप्प्रत्ययो वा भवति। निगदः निगादः। निनदः निनादः। निपठः निपाठः। निस्वनः निस्वानः। नाविति किम्। प्रगादः॥

क्वणोऽनुपसर्गाच्च ॥ ८७ ॥

क्वणेरनुपसर्गान्नौ चोपपदे भावेऽकर्तरि च कारके अप्प्रत्ययो वा भवति। क्वणः क्वाणः। निक्वणः निक्वाणः। अनुपसर्गादिति किम्....॥

उपसर्गे च वीणायाः ॥ ८८ ॥

क्वणेर्धातोर्वीणायाः सम्बन्धिन्यर्थे वर्तमानादनुपसर्गान्नावुपसर्गे चोपपदे भावेऽकर्तरि च कारके अप्प्रत्ययो वा भवति। क्वणो वीणायाः, क्वाणो वीणायाः। एवं निक्वणः प्रक्वाणः। वीणायाः इति किम्। प्रतिक्वाणो वर्तते॥

नित्यं पणः परिमाणे ॥ ८९ ॥

पणेर्धातोः परिमाणेऽर्थे नित्यमप्प्रत्ययो भवति घञोऽपवादः। मूलकपणः। कर्पटकपणः। परिमाण इति किम्। पाणः॥

मदोऽनुपसर्गात् ॥ ९० ॥

माद्यतेरनुपसर्गाद् भावेऽकर्तरि च कारके अप्प्रत्ययो भवति। (घ)ञोऽपवादः। मदः। अनुपसर्गादिति किम्। उन्मादः॥

---

* इतः पूर्वं कियांश्चिद् ग्रन्थपातो मातृकायां सम्भाव्यते। स च "स्वनहसोर्वा" इत्येवञ्जातीयः स्यात्।

प्रसमोर्हर्षे ॥ ९१ ॥

मदेर्धातोः प्रसमोरुपपदयोर्हर्षेऽर्थे अप्प्रत्ययो भवति । प्रमदः कन्यानाम् । सम्मदः कोकिलानाम् । हर्ष इति किम् । प्रमादः । सम्मादः ॥

समुदोरजः पशुषु ॥ ९२ ॥

अजेर्धातोः समुदोरुपपदयोः पशुविषये भावेऽकर्तरि च कारके अप्प्रत्ययो भवति । घञोऽपवादः । समजः पशूनां, समूह इत्यर्थः । उदजः पशूनां, प्रेरणमित्यर्थः । पशुष्विति किम् । समाजो ब्राह्मणानाम् । उदाजः शकुनीनाम् ॥

प्रजने सर्त्तेः ॥ ९३ ॥

प्रजनो गर्भग्रहणं, तद्विषये वर्तमानात् सर्त्तेः अप्प्रत्ययो भवति । घञोऽपवादः । गवामुपसरः । प्रजन इति किम् । उपसारः ॥

न्यभ्युपविषु ह्वः सम्प्रसारणं च ॥ ९४ ॥

नि अभि उप वि इत्येषूपपदेषु ह्वयतेर्भावे अकर्तरि च कारकेऽप्प्रत्ययो भवति सम्प्रसारणं च । निहवः । अभिहवः । उपहवः । विहवः । एतेष्विति किम् । संह्वायः ॥

आङि युद्धे ॥ ९५ ॥

ह्वयतेराङ्युपपदे युद्धेऽभिधेये अप्प्रत्ययः सम्प्रसारणं च भवति । आहूयन्तेऽस्मिन् परस्परमाहवः । युद्ध इति किम् । आह्वायः ॥

निपाने वृद्धिश्च ॥ ९६ ॥

ह्वयतेराङ्युपपदे निपानार्थेऽप्प्रत्ययः सम्प्रसारणं वृद्धिश्च भवति । आहावः निपानम् उदकाधारः । निपान इति किम् । आह्वायः ॥

नाम्न्ययच्च ॥ ९७ ॥

ह्वयतेराङ्युपपदे नाम्न्यभिधेये अप्प्रत्ययः सम्प्रसारणमयच्चागमो भवति । आह्वयः नाम ॥

सामि च द्यूते ॥ ९८ ॥

ह्वयतेराङि समि चोपपदे द्यूतेऽभिधेयेऽप्प्रत्ययः सम्प्रसारणमयागमो भवति । समाह्वयः प्राणिद्यूतम्* । भावे अनुपसर्गस्येति किम् । सङ्घातः । अकारकरणमुदात्तार्थम् (?) ॥

मूर्त्तिनिकरमेघेषु घनः ॥ ९९ ॥

हन्तेर्मूर्त्यादिष्वर्थेषु अप्प्रत्ययो घनादेशश्च निपात्यते । मूर्तिः काठिन्यम् । दधिघनः । अभ्रघनः । घनाः केशाः । घनो मेघः । कथं घनं दधि । त(त्क ? द्ध)संयोगात् ॥

अन्तर्घनोऽन्तर्घणश्च देशे ॥ १०० ॥

अन्तरुपपदे देशेऽभिधेयेऽप्प्रत्ययो णत्वं च पक्षे निपात्यते । अन्तर्घणो नाम बाह्लीकेषु देशः । तमन्येऽन्तर्घन इत्याचक्षते ॥

प्रघणः प्रघाणश्चागारैकदेशे ॥ १०१ ॥

प्रपूर्वाद्धन्तेरगारैकदेशेऽभिधेयेऽप्प्रत्ययो ह्रस्य च घत्वं दीर्घश्च वा निपात्यते । प्रघणः द्वारालिन्दः । प्रघाणः स एव ॥

अपघनोद्घनावङ्गात्याधानयोः ॥ १०२ ॥

हन्तेरपपूर्वस्योत्पूर्वस्य च यथासङ्ख्यम् अङ्गे अत्याधाने चाभिधेये अप्प्रत्ययो घनादेशश्च निपात्यते । अपघनः अङ्गम् । उद्घनः अत्याधानं, यस्मिन्नारोप्य काष्ठानि तक्ष्यन्ते ॥

विघनायोघनौ करणे ॥ १०३ ॥

हन्तेर्विपूर्वस्यायःपूर्वस्य च करणे कारके अप्प्रत्ययो घनादेशश्च निपात्यते । विहन्यते अनेन विघनः । अयो हन्यतेऽनेनेत्ययोघनः ॥

(द्रुघन)द्रुघणौ ॥ १०४ ॥

हन्तेर्द्रुपूर्वस्य करणे कारके अप्प्रत्ययो हस्य घत्वं णत्वाभावश्च पक्षे निपात्यते । द्रुर्हन्यतेऽनेनेति द्रुघनः । द्रुघणः स एव ॥

---

* इत उत्तरं 'भावेऽनुपसर्गस्य', 'हनश्च वधः' इति सूत्रद्वयं, तद्वृत्त्यादिकं च लुप्तं स्यात् ।

स्तम्बे क च ॥ १०५ ॥

हन्तेः स्तम्ब उपपदे करणे कारके कप्रत्ययः पक्षे घनादेशश्च भवति। स्तम्बघ्नः स्तम्बघनः । 'स्थास्नापाव्यधिहानियुधादिभ्यः क' इति सिद्धे करणे ल्युटा बाधो मा भूदिति वचनम् ॥

उपघ्न आश्रये ॥ १०६ ॥

उपपूर्वाद्धन्तेराश्रयेऽभिधेये कप्रत्ययो निपात्यते । उपघ्नः आश्रयः । आश्रयशब्दः सामीप्यमपि लक्षयति । ग्रामोपघ्नः । अत्र (तु ? तूप)पूर्वस्य तस्याधिकरणे ल्युटा बाधो मा भूदिति पुनर्वचनम् ॥

परौ डित् ॥ १०७ ॥

हन्तेः परावुपपदे करणेऽप्प्रत्ययो डित् घनादेशश्च भवति । परिघ्न-न्त्यनेनेति परिघः ॥

समुदोर्गणप्रशंसयोः ॥ १०८ ॥

हन्तेः समुदोरुपपदयोर्यथासङ्ख्यं गणे प्रशंसायां चाभिधेये अप्प्रत्ययो डित् घनादेशश्च भवति । सङ्घः गणः । उद्घः प्रशस्तः । गणप्रशंसयोरिति किम् । सङ्घातः ॥

नौ निमिते ॥ १०९ ॥

हन्तेर्नावुपपदे निमितेऽर्थेऽप्प्रत्ययो डित् घनादेशश्च भवति । निघाः शालयः । आरोहतः परिणाहतश्च मिता इत्यर्थः ॥

ड्वितः क्त्रिः ॥ ११० ॥

ड्वितो धातोर्भावे क्त्रिःप्रत्ययो भवति । पक्त्रिमम् । अस्मात् तेन निर्वृत्तमित्यर्थे नित्यमपं वक्ष्यति । तेन केवलप्रयोगो न भवति । ककारः कित्कार्यार्थः ॥

ट्वितोऽथुच् ॥ १११ ॥

ट्वितो भावेऽथुच्प्रत्ययो भवति । वेपथुः ॥

## यजियातिप्रच्छिरक्षिभ्यो नः ॥ ११२ ॥

यजादिभ्यो धातुभ्यो भावे नप्रत्ययो भवति । यज्ञः । यत्नः । प्रश्नः । रक्ष्णः ॥

## विच्छेर्नङ् ॥ ११३ ॥

विच्छेर्भावे नङ्प्रत्ययो भवति । विश्नः । ङकारो गुणप्रतिषेधार्थः ॥

## स्वपो नन् ॥ ११४ ॥

स्वपेर्भावे नन्प्रत्ययो भवति । स्वप्नः । नकारः स्वरार्थः ॥

## आङि दः किः ॥ ११५ ॥

दारूपाद् धातोराङ्युपपदे भावेऽकर्तरि च कारके किप्रत्ययो भवति । आदिः । कित्करणमातोलोपार्थम् ॥

## उपसर्गे घः ॥ ११६ ॥

धारूपाद् धातोरुपसर्ग उपपदे भावे अकर्तरि च कारके किप्रत्ययो भवति । प्रधिः । अन्तर्धिः ॥

## कर्मण्यधिकरणे ॥ ११७ ॥

धारूपाद् धातोः कर्मण्युपपदे अधिकरणे कारके किप्रत्ययो भवति । इषुधिः ॥

## अभिविधाविनुण् ॥ ११८ ॥

अभिविधिरभिव्याप्तिस्तस्यां गम्यमानायां धातोर्भाव इनुण्प्रत्ययो भवति । समन्ताद्रावः (सान्द्रा ? सांरा)विणम् । सा(ङ्कु ? ङ्कू)टिनम् । बहुलाधिकाराद् युजपि भवति । संरवणम् । सङ्कूटनम् ॥

## स्त्रियां क्तिन् ॥ ११९ ॥

स्त्री प्रत्ययार्थे विशेषणम् । स्त्रीलिङ्गे भावे अकर्त्तरि च कारके क्तिन्प्रत्ययो भवति । घञजपामपवादः । कृतिः हृतिः । ककारः कित्कार्यार्थः ॥

श्रुस्तुपदिसदिविदिक्षमिलभ्यर्दिशंसिपचिकण्डूयिव्यव-
क्रुशीषियजिमन्यासि(श्रा? शा)सिभ्यः ॥ १२० ॥

श्रृणोत्यादिभ्यः स्त्रीलिङ्गे भावे अकर्त्तरि च कारके क्तिन्प्रत्ययो भवति। वक्ष्यमाणैः क्विबादिभिरपवादैः सह समावेशार्थं वचनम्। श्रुतिः प्रतिश्रुत्। स्तुतिः प्रतिस्तुत्। एवं सम्पत्तिः आपत्तिः। (आसत्तिः)। सं-(व? वि)त्तिः। क्षान्तिः। लब्धिः। अर्त्तिः। (प्रशस्तिः)। पक्तिः। कण्डूतिः। व्यवक्रुष्टिः। इष्टिः। मतिः। उपास्तिः। अनुशिष्टिः आशीः॥

आङि सुञः ॥ १२१ ॥

सुनोतेराङ्युपपदे भावेऽकर्तरि च कारके स्त्रियां क्तिन्प्रत्ययो भवति। क्यपोऽपवादः। आसुतिः। आङीति किम्। सुत्या॥

समीणः ॥ १२२ ॥

एतेः सम्युपपदे भावे स्त्रियां क्तिन्प्रत्ययो भवति। समितिः। समीति किम्। इत्या॥

ऊतियूतिजूतिसातिहेतिज्ञप्तिकीर्त्तयश्च ॥ १२३ ॥

ऊत्यादयः स्त्रियां भावादावर्थे क्तिन्प्रत्ययान्ता निपात्यन्ते। ऊतिः। युजुवोर्दीर्घश्च। यूतिः। जूतिः। सनोतेः स्यतेर्वा सातिः। हन्तेर्हेरेत्वेन हिनोतेर्वा गुणेन हेतिः। ज्ञापयतेर्ज्ञप्तिः। कीर्तयतेः कीर्त्तिः। आद्या(?)ण्य-न्तलक्षणो यु(र्ज्ञ? ज्)भवति। 'ऊत्यानिना' इत्यन्तोदात्तत्वं लक्ष्यते॥

भावे स्थापागापचिभ्यः ॥ १२४ ॥

स्थापागापचिभ्यो धातुभ्यः स्त्रीलिङ्गे भावे क्तिन्प्रत्ययो भवति। अवस्थितिः। सम्पीतिः। सङ्गीतिः। पक्तिः। भावग्रहणम(र्थान्त)रनिरासार्थम्। बहुलाधिकाराद् व्यवस्था संस्थेत्याद्यपि॥

व्रजियज्यास्यदीण्भ्यः क्यप् ॥ १२५ ॥

व्रज्यादिभ्यः स्त्रियां भावादावर्थे क्यप्प्रत्ययो भवति। व्रज्या। इज्या। आस्या। अद्या। इत्या। पकार उत्तरत्र पुगर्थः॥

पुङ्शीङ्भनिविदिचरिभ्यः संज्ञायाम् ॥ १२६ ॥

सुनोत्यादिभ्यः स्त्रियां भावादावर्थे संज्ञायां क्यप्प्रत्ययो भवति । सुत्या । (शयं?) शेरतेऽस्यामनयेति (वा) शय्या । एवं मन्या । विद्या । चर्या । संज्ञायामिति किम् । संमतिः संवित्तिः ॥

अजेः समि ॥ १२७ ॥

अजेः सम्युपपदे स्त्रियां भावादावर्थे संज्ञायां क्यप्प्रत्ययो भवति । समज्या । संज्ञायामिति किम् । संवीतिः ॥

सदिपतिभ्यां नौ ॥ १२८ ॥

सदि प(दि ? ति) इत्येताभ्यां नावुपपदे स्त्रियां भावादावर्थे संज्ञायां क्यप्प्रत्ययो भवति । निषद्या । निपत्या । संज्ञायामिति किम् । निपत्तिः ॥

भृञो वा ॥ १२९ ॥

भृञः स्त्रियां भावादावर्थे संज्ञायां वा क्यप्प्रत्ययो भवति । भृत्या भृतिः । बहुलाधिकारात् भाव एव क्यप् । तेन कर्मणि भार्येत्येव भवति ॥

कृञः श च ॥ १३० ॥

करोतेर्भावादावर्थे स्त्रियां शप्रत्ययः क्यप् च वा भवति । क्रिया कृत्या कृतिः ॥

इच्छामृगये च ॥ १३१ ॥

इच्छामृगयाशब्दौ स्त्रियां भावे शप्रत्ययान्तौ निपात्येते । इषेर्मृगयतेश्च इच्छा मृगया ॥

परौ सृचरिभ्यां यः ॥ १३२ ॥

सृ चरि इत्येताभ्यां परावुपपदे स्त्रियां भावे यप्रत्ययो भवति । परिसर्या । परिचर्या ॥

अटाट्याद्वा ॥ १३३ ॥

अटतेर्यङन्तात् भावे स्त्रियां यप्रत्ययो वा भवति । अटाट्या अटाटा ॥

जागुः ॥ १३४ ॥

जागर्तेर्भावे यप्रत्ययो भवति । जागर्या ॥

अ प्रत्ययाच्च ॥ १३५ ॥

सनाद्यन्तात् जागर्तेश्च अप्रत्ययो भवति । चिकीर्षा । पुत्रीया । जागरा ॥

गुरोर्हलः ॥ १३६ ॥

गुरोर्हलन्तात् धातोर्भावे अप्रत्ययो भवति । ईहा । रक्षा । कुण्डा ॥

न राध्यज्ज्याऽपिदीपिचायिस्रंसिध्वंस्यादेर्निष्ठायामनिटः ॥ १३७ ॥

राध्यादयो य उपात्ता अनुपात्ताश्च निष्ठायामनिटो धातवस्तेभ्यो 'गुरोर्हल' इति प्राप्तः अप्रत्ययो न भवति । राद्धिः । आप्तिः । आप्तिः । दीप्तिः । अपचितिः । स्रस्तिः । ध्वस्तिः । अनुपात्तेभ्यः खल्वपि । स्फूर्त्तिः । मूर्त्तिः । निष्ठायामनिट इति किम् । शिक्षा । भिक्षा ॥

षितोऽङ् ॥ १३८ ॥

षितो धातोः स्त्रियां भावेऽङ्प्रत्ययो भवति । त्रपा । (अक्षा ? क्षमा) । (अ ? ज)रा । घटा । ङकारो ङित्कार्यार्थः ॥

क्रपेः सम्प्रसारणं च ॥ १३९ ॥

क्रपेरङ्प्रत्ययः सम्प्रसारणं च भवति । कृपा । घटादित्वात् पूर्वेणैव सिद्धे सम्प्रसारणार्थं वचनम् ॥

याचितृषिभ्यां नुट् च ॥ १४० ॥

आभ्यां स्त्रियां भावे अङ्प्रत्ययो नुट् चागमो भवति । याच्ञा । तृष्णा ॥

भिदिच्छिदिविदिदयिरुजिमृजिक्षिपिचुरिपृच्छिभ्योऽसंज्ञायाम् ॥ १४१ ॥

भिदादिभ्यः स्त्रियामसंज्ञायां भावादावर्थे अङ्प्रत्ययो भवति । भिदा । छिदा । विदा । दया । रुजा । मृजा । क्षिपा । चुरा । पृच्छा । असंज्ञायामिति किम् । भित्तिः । विच्छित्तिः ॥

गुहितुलिवसिवपिक्षपिक्षिभ्यः संज्ञायाम् ॥ १४२ ॥

गुहादिभ्यः स्त्रियां भावादावर्थे संज्ञायामङ्प्रत्ययो भवति । गुहा गिरिकन्दरा । तुला उपमानम् । वसा स्नेहः । वपा मेदोविशेषः । क्षपा रात्रिः । क्षिया आचारभेदः ॥

रिखिलिखिशुभिसिधिमिधिगुधिभ्यो गुणश्च ॥ १४३॥

रिखादिभ्यो धातुभ्यः स्त्रियां भावादावर्थे संज्ञायामङ्प्रत्ययो गुणश्च भवति । रिखिलिखिः समानार्थः सौत्रो धातुः । रेखा राजिः । लेखा सैव । शोभा कान्तिः । सेधा सत्त्वम् । मेधा बुद्धिः । गोधा गोत्राणा ॥

ऋकृहृधृतृभ्यो वृद्धिश्च ॥ १४४ ॥

एभ्यः स्त्रियां भावादावर्थेऽङ्प्रत्ययो वृद्धिश्चैषां भवति । आरा शस्त्री । कारा गुप्तिः । हारा मानम् । धारा प्रपातः । तारा ज्योतिः ॥

भूषिभीषिचिन्तिपूजिकथिकम्पिचर्चिस्पृहितोलिदोलिभ्यश्च ॥ १४५ ॥

भूषादिभ्यो ण्यन्तेभ्यः स्त्रियां भावादावर्थे अङ्प्रत्ययो भवति । युचोऽपवादः । भूषा । भीषा । चिन्ता । पूजा । कथा । कम्पा । चर्चा । स्पृहा । तोला । दोला । चकाराद् यथादर्शनमन्येभ्योऽपि ॥

आतश्चोपसर्गे ॥ १४६ ॥

आकारान्तेभ्यो धातुभ्यः उपसर्गे उपपदे स्त्रियां भावादावर्थे अङ्प्रत्ययो भवति । उपदा । उपधा । श्रद्धा । अन्तर्धा ॥

भातेश्च ॥ १४७ ॥

भातेश्च स्त्रियां भावादावर्थे अङ्प्रत्ययो भवति । अनुपसर्गार्थमारम्भः । भा प्रभा विभा प्रतिभा । कथं भं नक्षत्रम् । भा अस्यास्तीत्यर्शआदित्वादच् ॥

ण्यासश्रन्थघट्टवन्दविदिभ्यो युच् ॥ १४८ ॥

ण्यन्तेभ्यः श्रन्थादिभ्यश्च स्त्रियां भावादावर्थे युच्प्रत्ययो भवति। अप्रत्ययस्यापवादः। कारणा। हारणा। उपासना। श्रन्थना। घट्टना। वन्दना। वेदना॥

इषेरनिच्छायाम् ॥ १४९ ॥

इषेरनिच्छायां वर्तमानात् स्त्रियां भावादावर्थे युच्प्रत्ययो भवति। अन्वेषणा। अनिच्छायामिति किम्। इष्टिः। कथं प्राणैषणा। वित्तैषणा परलोकैषणेति। बहुलाधिकारात्॥

अधिपर्योर्वा ॥ १५० ॥

इषेरनिच्छायां वर्तमानात् अधिपर्योरुपपदयोः स्त्रियां भावादावर्थे युच्प्रत्ययो वा भवति। अध्येषणा अधीष्टिः। पर्येषणा परीष्टिः॥

समादिषु पदिसदिविदिशासिश्रुस्नुनहि[1]वृषिप्रुषिवृतियतीण्भृप्रभृतिभ्यः क्विप् ॥ १५१ ॥

पदिप्रभृतिभ्यो धातुभ्यः समादिषूपपदेषु स्त्रियां भावादावर्थे क्विप् प्रत्ययो भवति। सम्पत् विपत्। संसत् परिषत्। सवित् निवित्। (प्र?आ) शीः। प्रतिश्रुत्। परिस्नुत्। उपानद्। प्रावृट्। विप्रुट्। निवृत् उपावृत्। संयत्। समित्। उपभृत्। प्रभृतिग्रहणात् समिध्यतेऽनयेति समिदादयः॥

क्रुधियुधिक्षुधितृषित्विषिरुजिरुचिशुचिमुदिमृदिगॄत्रादिभ्यश्च ॥ १५२ ॥

क्रुधादिभ्यश्च स्त्रियां भावादावर्थे क्विप्प्रत्ययो भवति। क्रुत्। युत्। क्षुत्। तृट्। त्विट्। रुक्। रुक्। शुक्। मुत्। मृत्। गीः। त्राः। आदिग्रहणाद् यथादर्शनमन्येभ्योऽपि॥

ह्रीभील्भूकण्डूयिकुस्भिदिच्छिदिनुदिदशिनाशियुजिज्वरत्वरावस्त्रिवुमवनुशदादिभ्यो वा ॥ १५३ ॥

1. 'हिविषिप्राषिवृ' क. पाठः.

जिह्रेत्यादिभ्यः स्त्रियां भावादावर्थे क्विप्प्रत्ययो वा भवति। ह्रीः ह्रीतिः। भीः भीतिः। लूः लूतिः। भूः भूतिः। क(ण्डूयः ? ण्डूः) कण्डूया। कृत् कृतिः। भित् भित्तिः। छित् छित्तिः। नुत् नुत्तिः। दृक् दृष्टिः। (नट् नष्टिः।) युक् युक्तिः। जूः जूतिः। तूः तूर्त्तिः। ऊः ऊर्त्तिः। स्रूः स्रूतिः। मूः मूतिः। नुत् नुतिः। शत् श(क्तिः ? त्तिः)॥

क्रियाव्यतिहारेऽनीहीक्ष्यादिभ्यो णच्॥ १५४॥

क्रियाव्यतिहारविषयेभ्यो धातुभ्यः ईहीक्ष्यादिवर्जितेभ्यः स्त्रियां भावे णच्प्रत्ययो भवति। क्तिन्नादीनामपवादः। व्यावहासी। व्यावक्रोशी। व्यात्युक्षी। व्यावचोरी। अनीहीक्ष्यादिभ्य इति किम्। व्यतीहा(रः ?) व्यतीक्षा। आदिग्रहणात् व्यतिपृच्छा। व्यवहृतिः। अस्मात् 'णजिनुण्भ्यामि'ति स्वार्थिकमञं वक्ष्यति। तेन केवलस्य प्रयोगो न भवति॥

आक्रोशे नञ्यनिः॥ १५५॥

धातोर्नञ्युपपदे आक्रोशे गम्यमाने स्त्रियां भावे अनिःप्रत्ययो भवति। अजननिस्ते वृषल! भूयात्। अजीवनिस्ते जाल्म! भूयात्। आक्रोश इति किम्। अकृतिस्तस्य पदस्य। नञीति किम्। मृतिस्ते वृषल! भूयात्॥

ग्लाम्लाज्याहाभ्यः॥ १५६॥

ग्लादिभ्यः स्त्रियां भावे अनिप्रत्ययो भवति। ग्लानिः। म्लानिः। ज्यानिः। हानिः॥

ण्वुल्॥ १५७॥

धातोः स्त्रियां भावे (अनि ? ण्वुल्) प्रत्ययो भवति। आसिका। शायिका। जीविका। कारिका॥

संज्ञायाम्॥ १५८॥

संज्ञायां विषये धातोः स्त्रियां भावे ण्वुल्प्रत्ययो भवति। उद्दालपुष्पभञ्जिका। (चा ? व)रणपुष्पचायिका॥

रोगाख्यायां च ॥ १५९ ॥

रोगाख्यायां च स्त्रियां भावे ण्वुल्प्रत्ययो भवति । प्रवाहिका । प्रच्छर्दिका । विचर्चिका ॥

पुंस्यन्यत्रापि ॥ १६० ॥

पुल्लिङ्गे भावे रोगाख्यायामन्यत्रापि ण्वुल्प्रत्ययो भवति । अरोचकः । अनाशकः । कृत् (?) कण्ठकः । उत्कर्णकः ॥

प्रश्नाख्यानयोरिञ्च वा ॥ १६१ ॥

प्रश्नाख्यानयोर्गम्यमानयोः स्त्रियां भावे इञ्प्रत्ययो ण्वुल् च वा भवति । कां त्वं कारिमकार्षीः, कां कारिकां, कां कृत्यां, कां कृतिम् । सर्वां कारिमकार्षं सर्वां कारिकां सर्वां कृत्यां सर्वां कृतिम् ॥

पर्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ १६२ ॥

पर्याय अर्ह ऋण उत्पत्ति इत्येतेष्वर्थेषु स्त्रियां भावे ण्वुच्प्रत्ययो भवति । भवतः शायिका । अर्हति भवानिक्षुभक्षिकाम् । इक्षुभक्षिकां मे धारयसि । इक्षुभक्षिका उदपादि । वेत्येव । चिकीर्षोत्पद्यते । प्रत्ययान्तरकरणं स्वरार्थम् ॥

नपुंसके भावे क्तः ॥ १६३ ॥

नपुंसके लिङ्गे भावेऽर्थे धातोः क्तप्रत्ययो भवति । हसितं छात्रस्य । नृत्तं मयूरस्य ॥

ल्युट् च ॥ १६४ ॥

धातोः नपुंसके भावे ल्युट् च भवति । वचनम् । गमनम् । टकार उत्तरत्र ङीबर्थः ॥

कर्मणि च येन संस्पर्शात् कर्त्तुः शरीरसुखम् ॥ १६५ ॥

येन कर्मणा संस्पृश्यमानस्य कर्त्तुः शरीरसुखम् उत्पद्यते तस्मिन् कर्मण्युपपदे धातोर्नपुंसके भावे ल्युट्प्रत्ययो भवति । पयःपानम् । ओदनभोजनम् । पूर्वेण सिद्धे नित्यसमासार्थं वचनम् । कर्मणीति किम् ।

तूलिकाया उत्थानम् । संस्पर्शादिति किम् । अग्निकुण्डस्योपासनम् । कर्त्तुरिति किम् । गुरोः स्नापनम् । स्नापयतेर्न गुरुः कर्त्ता, किं तर्हि, कर्म । शरीरग्रहणं किम् । पुत्रस्य परिष्वजनम् । पुत्रसंस्पर्शान्न शरीरसुखं, किं तर्हि, मानसी प्रीतिः । सुखमिति किम् । कण्टकानां मर्दनम् । सर्वत्रासमासः प्रत्युदाहार्यः । अथवान्यथा व्याख्यायते — येन कर्मणा संस्पृश्यमानस्य कर्त्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्यभिधेये धातोर्ल्युट्प्रत्ययो भवति । राज्ञा भुज्यन्ते राजभोजनाः शालयः । राजाच्छादनाः प्रावाराः । राजपरिधानानि वासांसि ॥

करणाधिकरणयोश्च ॥ १६६ ॥

करणाधिकरणयोरर्थयोर्धातोर्ल्युट्प्रत्ययो भवति । एषणी । लेखनी । गोदोहनी । अप्रानं (?) प्रस्थानमिति ॥

ष्ठिवुसिव्वोर्दीर्घश्च वा ॥ १६७ ॥

ष्ठिवुसिवोर्भावादावर्थे ल्युट्प्रत्ययो दीर्घश्चानयोर्वा भवति । ष्ठीवनं ष्ठेवनम् । सीवनं सेवनम् ॥

कृञः कर्त्तरि ॥ १६८ ॥

कृञः कर्त्तरि ल्युट् । गुणे कृते दीर्घश्चास्य भवति । करोतीति कारणम् ॥

व्रश्चिशादिह्लादिरम्यादिभ्यश्च ॥ १६९ ॥

(प्रच्छा ? व्रश्च्या)दिभ्यश्च कर्त्तरि ल्युट्प्रत्ययो भवति । इध्म(प्रश्नः ? व्रश्चनः) । पलाशशातनः । ह्लादनी । रमणी । आदिग्रहणात् कमनीनन्दनीत्यादयो भवन्ति ॥

भुज्याच्छाद्यवस्राव्यवसिच्यादिभ्यः कर्मणि ॥ १७० ॥

भुज्यादिभ्यः कर्मणि ल्युट्प्रत्ययो भवति । भोजनम् । आच्छादनम् । अवस्रावणम् । अवसेचनम् । आदिग्रहणादशनं वसनमाभरणमित्यादयः ॥

स्कन्दिपतिरुच्योतिस्रवत्यादिभ्योऽपादाने ॥ १७१ ॥

---

१. 'वस्राप्यवस्रावसि' ख. पाठः

स्कन्द्यादिभ्योऽपादाने ल्युट्प्रत्ययो भवति । प्रस्कन्दतेऽस्मादिति प्रस्कन्दनः । प्रपतनः । प्रश्च्योतनः । प्रस्रवणः । आदिग्रहणान्निरणस्तम्बोद्धरणादयः ॥

दाञः सम्प्रदाने च ॥ १७२ ॥

ददातेरपादाने सम्प्रदाने च ल्युट्प्रत्ययो भवति । अपादानम् । सम्प्रदानम् ॥

पुंसि संज्ञायां घः ॥ १७३ ॥

पुंसि भावादावर्थे संज्ञायां घप्रत्ययो भवति । प्रच्छदः । उरश्छदः । दन्तच्छदः । करः । आकरः । बहुलवचनाद् घञादयोऽपि । कारकः । नपुंसकेऽपि । छदनम् । घकारः 'छादेर्घेऽद्व्याद्युपसर्गस्ये'ति विशेषणार्थः ॥

गोचरसञ्चरवहव्रजव्यजक्रमापणनिगमबकभगाकर्षनिकषाश्च ॥ १७४ ॥

गोचरादयः शब्दाः पुंसि भावादावर्थे घप्रत्ययान्ता निपात्यन्ते । गावश्चरन्त्यस्मिन्निति गोचरः । सञ्चरन्त्यनेनेति सञ्चरः । एवं वहः । व्रजः । व्यजः । निपातनाद् वीभावाभावः । क्रमः । स्वरे विशेषः । आवृत्य पणन्तेऽस्मिन्नित्यापणः । निगच्छन्ति तस्मिन्निति निगमः । बक्तीति बकः । भज्यतेऽनेनेति भगः । आकर्षन्त्यस्मिन्नित्याकर्षः । निकषः ॥

हलो घञ् ॥ १७५ ॥

हलन्ताद् धातोः पुंसि संज्ञायां करणाधिकरणयोर्घञ्प्रत्ययो भवति घस्यापवादः । वेदः । लेखः । रागः । रङ्गः । प्रसादः । अपामार्गः ॥

अध्यायन्यायोद्यावसंहारावहाराधारावायाश्च ॥ १७६ ॥

अध्यायादयः शब्दाः पुंसि संज्ञायां करणाधिकरणयोर्घञन्ता निपात्यन्ते । अधीयन्तेऽस्मिन्नित्यध्यायः । नीयतेऽनेनेति न्यायः । उद्युवन्त्यनेनेति उद्यावः । संहरन्त्यनेनेति संहारः । अवहरन्त्यनेनेति अवहारः । आध्रियन्तेऽस्मिन्नित्याधारः । आवयन्त्यनेनेत्यावायः ॥

उदङ्कोऽनुदके ॥ १७७ ॥

अञ्चतेरुद्युपपदे अनुदके विषये ल्युडपवादो घञ् निपात्यते। तैलोद(कं? क्ः)। अनुदक इति किम्। उदकोदञ्चनः। 'हलो घञि'ति सिद्धे उदकप्रतिषेधार्थं वचनम्। स्वररूपाविशेषाच्च घोऽपि न भवति॥

जालमानायः॥ १७८॥

आङ्पूर्वान्नयतेः करणे घञ् निपात्यते जालं चेत्। आनायो मत्स्यानाम्। आनायो मृगाणाम्॥

खनो घ च॥ १७९॥

खनेः करणाधिकरणयोः पुंसि संज्ञायां घप्रत्ययो घञ् च भवति। आखनः आखानः॥

डडरेकेकबकाश्च॥ १८०॥

खनेः करणाधिकरणयोः पुंसि संज्ञायां ड डर इक इकबक इत्येते प्रत्यया भवन्ति। आखः। आखरः। आखनिकः। आखनिकबकः॥

इकिश्तिपः स्वरूपे॥ १८१॥

धातोः स्वरूपेऽभिधेये इ कि श्तिप् इत्येते प्रत्यया भवन्ति। इ(गामिः)। युधिः। पचतिः॥

अर्थे च॥ १८२॥

धातोरर्थे चाभिधेये इकिश्तिपः प्रत्यया भवन्ति। जनिर्वर्त्तते। भुजिरा(नु? र)भ्यते। भवतिः सम्पद्यते॥

भावकर्मणोर्दुरीषत्सु(षु) कृच्छ्राकृच्छ्रार्थेषु खल्॥ १८३॥

कृच्छ्राकृच्छ्रार्थेषु दुरीष(त्सू? त्सुषू)पपदेषु भावकर्मणोर्धातोः खल्-प्रत्ययो भवति। कृत्यादीनामपवादः। दुष्करं भवता। दुष्करः कटो भवता। (ईषत्करं भवता। ईषत्करः कटो भवता। सुकरं भवता।) सुकरः कटो भवता। दुरीष(त्स्वि? त्सुष्वि)ति किम्। कृच्छ्रसाध्यम्। कृच्छ्राकृच्छ्रार्थे-ष्विति किम्। ईषत्कार्यः। बहुलाधिकारादीष .... तिम्यपि भवति। खकार उत्तरत्र मुमर्थः॥

भूकृञ्भ्यां कर्तृकर्मणोश्च च्व्यर्थे॥ १८४॥

भवतेः करोतेश्च यथासङ्ख्यं कर्तृकर्मणोश्च्व्यर्थयो(रीषदा ? दुरा)दिषूपपदेषु च भावकर्मणोरर्थयोः खल्प्रत्ययो भवति । अनाढ्येन भवता दुःखमाढ्येन भूयते दुराढ्यंभवम् । (ईषदाढ्यंभवम् ।) स्वाढ्यंभवम् । अनाढ्यो भवान् दुःखमाढ्यः क्रियते दुराढ्यंकरो भवान् । ईषदाढ्यंकरः । स्वाढ्यंकरः । च्व्यर्थ इति किम् । सुष्ठु आढ्येन भूयते भवता । ईषदाढ्य एव किं विक्रियते भवान् ॥

आतो युच् ॥ १८५ ॥

आकारान्ताद् धातोः कृच्छ्राकृच्छ्रार्थेषु दुरादिषूपपदेषु भावकर्मणोरर्थयोः युच् भवति । दुरुत्थानं भवता । ईषदुत्थानम् । सूत्थानम् । दुष्पानः सोमो भवता । ईषत्पानः । सुपानः ॥

शासियुधिदृशिधृषिमृषिभ्यश्च ॥ १८६ ॥

शास्यादिभ्यश्च दुरादिषूपपदेषु भावकर्मणोर्युच्प्रत्ययो भवति । दुश्शासनः । दुर्योधनः । दुर्दर्शनः । दुर्धर्षणः । दुर्मर्षणः* । सुशासनः । सुयोधनः । सुदर्शनः । सुधर्षणः । सुमर्षणः ॥

वर्त्तमानसामीप्ये वर्त्तमानवद् वा ॥ १८७ ॥

वर्तमानसामीप्ये भूते भविष्यति चार्थे वर्तमानाद् धातोः वर्तमानवत् प्रत्ययो वा भवति । 'वर्तमाने लडि'त्यत आरभ्य 'उणादयो भूतेऽपी'ति यावद् ये प्रत्ययास्ते भूतभविष्यतोर्वातिदिश्यन्ते । कदा देवदत्त! आगतोऽसि । अयमागच्छामि । आगच्छन्तमेव मां विद्धि । अयमागमम् । एषोऽस्म्यागतः । कदा देवदत्त! गमिष्यसि । एष गच्छामि । गच्छन्तमेव मां विद्धि । गन्तास्मि । वत्करणस्य सादृश्यार्थत्वात् येनैव विशेषेण प्रकृत्युपपदोपाध्यादिना वर्तमाने(प्रत्यया)विहितास्तेनैव भूतभविष्यतोरपि भवन्ति । कदा भवान् सोमं (पा ? पवि)तवान् । एषोऽस्मि पवमानः । कदा भवान् यक्ष्यते । एषोऽस्मि यजमानः । कदा भवान् कन्यामलङ्कृतवान् अलङ्करिष्यति वा । एषोऽस्म्यलङ्करिष्णुरिति । सामीप्य इति किम् । परुदगच्छत् वर्षेणागमिष्यति ॥

आशंसायां भूतवच्च ॥ १८८ ॥

आशंसायां गम्यमानायां भविष्यत्कालविषयाद् धातोः भूत(वद्) वर्तमानवच्च प्रत्यया भवन्ति । उपाध्यायश्चेदागमत् एते व्याकरणमध्यगीष्महि ।

* इतःपरम् ईषदि चोदाहार्यम् ।

उपाध्यायश्चेदागतः एतैर्व्याकरणमधीतम् । उपाध्यायश्चेदागच्छति एते व्याकरणमधीमहे । उपाध्यायश्चेदागमिष्यति एते व्याकरणमध्येष्यामहे । सामान्यातिदेशे विशेषानतिदेशात् लङ्लिटौ न भवतः । आशंसायामिति किम् । उपाध्याय आगमिष्यति, व्याकरणमध्येष्यामहे ॥

क्षिप्रवचने लृट् ॥ १८९ ॥

क्षिप्रवचन उपपदे आशंसायां गम्यमानायां धातोर्लृट्प्रत्ययो भवति । भूतवच्चेत्यस्यापवादः । उपाध्यायश्चेत् क्षिप्रमागमिष्यति एते क्षिप्रं व्याकरणमध्येष्यामहे । वचनग्रहणं पर्यायार्थम् । शीघ्रमाशु त्वरितमिति । नेति वक्तव्ये लृड्वचनं लुड्विषये विधानार्थम् । उपाध्यायश्चेत् श्वः शीघ्रमागमिष्यति एते शीघ्रं व्याकरणमध्येष्यामहे ॥

आशंसावचने लिङ् ॥ १९० ॥

आशंसावचन उपपद आशंसायां गम्यमानायां भविष्यति काले धातोर्लिङ्प्रत्ययो भवति । भूतवच्चेत्यस्यापवादः । उपाध्यायश्चेदागच्छेत् आशंसे युक्तोऽधीयीय । यत्र क्षिप्रवचनमाशंसावचनं चोपपदे भवतस्तत्रापि परत्वात् लिङेव भवति । उपाध्यायश्चेत् क्षिप्रमागच्छेत् आशंसे क्षिप्रं व्याकरणमधीयीय ॥

निष्पन्नवच्च सम्भावनायाम् ॥ १९१ ॥

अनिष्पन्ने निष्पन्नवच्च हेतोः शक्तिश्रद्धानं सम्भावना । तस्यां निष्पन्नवत् प्रत्यया भवन्ति ॥

समये चेत् प्रयत्नोऽभूदुदभूवन् विभूतयः ।
इषे चेद् वासवोऽवर्षीद् उदपत्स्यन्त शालयः ॥

विद्यमानकर्तृकेभ्योऽस्त्यर्थेभ्यो भवन्त्यर्थे सर्वा विभक्तयः ॥ १९२ ॥

विद्यमानकर्तृकेभ्योऽस्त्यर्थेभ्यो धातुभ्यः लडर्थे सर्वे लकारा भवन्ति । मार्गे कूपोऽभूत् । कूप आसीत् । कूपो बभूव । कूपो भविष्यति । कूपो भविता । कूपोऽस्तीति ॥

नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ १९३ ॥

प्रबन्धः सातत्येनानुष्ठानम् । कालानां सामीप्यं तुल्यजातीयेनाव्यवधानम् । तयोर्गम्यमानयोरनद्यतनवत् प्रत्ययविधिर्न भवति । लङ्लुटौ प्रतिषिध्येते । यावज्जीवं भृशमन्नमदात् । यावज्जीवं भृशमन्नं दास्यति । यावज्जीवं युक्तोऽध्यापिपत् । यावज्जीवमध्यापयिष्यति । येयं पौर्णमास्यतिक्रान्ता एतस्यामुपाध्यायोऽग्नीनाधित, सोमेनायष्ट । येयमागामिन्यमावास्या अस्यामुपाध्यायोऽग्नीनाधास्यते, सोमेन यक्ष्यते ॥

भविष्यति मर्यादावचने देशस्य विभागेऽवरस्मिन् [॥ १९४ ॥

भविष्यति काले मर्यादावचने सत्यवरस्मिन् देशविभागे अनद्यतनवत् प्रत्ययविधिर्न भवति । योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्ष्यामहे । द्विः सक्तून् पास्यामः । भविष्यतीति किम् । योऽयमध्वा गतः आपाटलिपुत्रात् तस्य यदवरं कौशाम्ब्यास्तत्र युक्ता अध्यैमहि । द्विः सक्तूनपिबाम । मर्यादावचन इति किम् । योऽयमध्वा निरवधिको गन्तव्यस्तस्य यदवरं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे । द्विः सक्तून् पातास्मः । अवरस्मिन्निति किम् । योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यत् परं कौशाम्ब्यास्तत्र द्विरोदनं भोक्तास्महे । द्विः सक्तून् पातास्मः ॥

कालस्य चानहोरात्राणाम् ॥ १९५ ॥

भविष्यति काले मर्यादावचने कालस्यावरस्मिन् विभागे अनद्यतनवत् प्रत्ययविधिर्न भवति न चेदहोरात्राणां सम्बन्धी विभागः । स चाहोरात्रैः कालस्य, कालेनाहोरात्राणाम्, अहोरात्रैरहोरात्राणां च भवति । योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । द्विरोदनं भोक्ष्यामहे । भविष्यतीत्येव । योऽयं संवत्सरोऽतीतस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्यैमहि । द्विरोदनमभुञ्ज्महि । मर्यादावचन इत्येव । योऽयम आगामी निरवधिकः कालस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येतास्महे । द्विरोदनं भोक्तास्महे । अवरस्मिन्नित्येव । परस्मिन् विभाषा

वक्ष्यति । अनहोरात्राणामिति किम् । योऽयं मास आगामी तस्य योऽवरः पञ्चदशरात्रः, योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरः (अर्धमासः, योऽयं त्रिंशद्रात्र आगामी तस्य योऽवरः) पञ्चदशरात्रस्तत्र युक्ता अध्यतास्महे । द्विः सक्तून् पातास्मः ॥

परस्मिन् वा ॥ १९६ ॥

भविष्यति काले कालस्य मर्यादावचने सति परस्मिन् अनहोरात्र-सम्बन्धिनि (वि)भागे वा अनद्यतनवत् प्रत्ययविधिर्न भवति । योऽय-मागामी संवत्सरस्तस्य यत् परमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । अध्येतास्महे । सक्तून् पास्यामः पातास्मः । अनहोरात्राणामिति किम् । योऽयं मास आगामी तस्य यः परः पञ्चदशरात्रस्तत्र युक्ता अध्येतास्महे । सक्तून् पातास्मः । भविष्यतीति किम् । योऽयं संवत्सरोऽतीतस्तस्य यत् परमाग्रहायण्यास्तत्र युक्ता अध्यैमहि । तत्रौदनमभुञ्ज्महि । मर्यादा-वचन इति किम् । योऽयमागामी निरवधिकः कालस्तस्य यत् परमाग्रहा-यण्यास्तत्रौदनं भोक्तास्महे । सक्तून् पातास्मः ॥

लिङ्निमित्ते लृङ् क्रियातिपत्तौ ॥ १९७ ॥

लिङ्निमित्तं 'हेतुफलयोर्लिङि'त्येवमादि । कुतश्चिद् वैगुण्यात् क्रियाया अनभिनिर्वृत्तिः क्रियातिपत्तिः । लिङ्निमित्ते क्रियातिपत्तौ सत्यां भविष्यति काले धातोर्लृङ्प्रत्ययो भवति । दक्षिणेन चेदयास्यत् न शकटं पर्याभविष्यत् । यदि कमलकमाह्वास्यत् (न) शकटं पर्याभविष्यत् । अत्र दक्षिणगमनं कमलकाह्वानं च हेतुः । अपर्याभवनं हेतुमत् । तयोः कुतश्चिल्लिङ्गात् भविष्यन्तीमनभिनिर्वृत्तिमवगम्यैवं प्रयुङ्क्ते ॥

भूते च ॥ १९८ ॥

लिङ्निमित्ते क्रियातिपत्तौ सत्यां भूते काले धातोर्लृङ्प्रत्ययो भवति । दक्षिणेन चेदयास्यत् न शकटं पर्याभविष्यत् ॥

प्रागुताप्योर्वा[1] ॥ १९९ ॥

---

१. 'प्योर्भूते वा' ख. पाठः.

'उताप्योर्बाढार्थे लिङि'त्यतः पूर्वं वक्ष्यमाणे लिङ्निमित्ते क्रियातिपत्तौ लृङ् (वा) भवति ॥

*गर्हायां लडपिजात्वोः ॥ २०० ॥

कथमि लिङ् च वा ॥ २०१ ॥

कथंशब्द उपपदे गर्हायां धातोः सर्वेषु कालेषु लिङ्प्रत्ययो भवति । लट् च वा भवति । कथन्नाम तत्रभवान् वृषलं याजयेत् याजयति । पक्षे यथास्वं लुङादयः । कथन्नाम तत्रभवान् वृषलमयीयजत् याजयेत् याजयांचकार याजयिष्यति याजायिता । अत्र लिङ्निमित्तमस्तीति क्रियातिपत्तौ भूते वा (लि ? लृ)ङ्, भविष्यति नित्यम् । कथं नाम तत्रभवान् वृषलमयाजयिष्यत् । कथं नाम तत्रभवान् वृषलं याजयेत् याजयति अयीयजत् अयाजयत् याजयाञ्चकार । भविष्यति तु — कथं नाम तत्रभवान् वृषलमयाजयिष्य(दि)ति नित्यं लृङेव भवति, न लङ्लुटौ गर्हायामिति किम् । कथं नाम तत्रभवान् ब्राह्मणमयीयजत् । एवं यथाकालं लुङादयो भवन्ति ॥

किंवृत्ते लिङ्लृटौ ॥ २०२ ॥

किंवृत्ते उपपदे गर्हायां सर्वेषु कालेषु धातोर्लिङ्लृटौ प्रत्ययौ भवतः । सर्वलकाराणामपवादः । को नाम वृषलः कतरो नाम कतमो नाम यं तत्रभवान् याजयेत् याजयिष्यति । अत्रापि लिङ्निमित्तमस्तीति क्रियातिपत्तौ भूते वा लृङ्, भविष्यति नित्यम् । को नाम वृषलः यं तत्रभवान् अयाजयिष्यत् । गर्हायामिति किम् । को नाग ब्राह्मणः यं तत्रभवानयीयजदित्यादि ॥

अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि ॥ २०३ ॥

अनवक्लृप्तिरसम्भावना । अमर्षोऽक्षमा । तयोर्गम्यमानयोः किंवृत्ते चाकिंवृत्ते चोपपदे सर्वेषु कालेषु धातोर्लिङ्लटौ भवतः । सर्वलकाराणामपवादौ । नावकल्पयामि न मर्षयामि च को नाम कतरो नाम

* अस्य वृत्तिर्मातृकायां लुप्ता ।

वृषलः, कथन्नाम यं तत्रभवान् याजयेत् याजयिष्यति। अत्रापि लिङ्निमित्त-मस्तीति क्रियातिपत्तौ भूते वा लृङ् भविष्यति नित्यम्। नावकल्पयामि न श्रद्दधे न मर्षयामि न क्षमे यं तत्रभवान् वृषलमयाजयिष्यत् ॥

किंकिलास्त्यर्थेषु लृट् ॥ २०४ ॥

किंकिलशब्दे अस्त्यर्थेषु चोपपदेष्वनवक्लृप्त्यमर्षयोः सर्वेषु कालेषु धातोर्लृडेव भवति। नावकल्पयामि न मर्षयामि किंकिल तत्रभवान् वृषलं याजयिष्यति। नावकल्पयामि न मर्षयामि अस्ति नाम भवति नाम विद्यते नाम तत्रभवान् वृषलं याजयिष्यति। अत्र लिङ्निमित्तं नास्तीति क्रियातिपत्तौ लृङ् न भवति ॥

यद्यदियदाजातुषु लिङ् ॥ २०५ ॥

धातोर्यदादिषूपपदेषु अनवक्लृप्त्यमर्षयोर्गम्यमानयोः सर्वेषु कालेषु लिङेव भवति। नावकल्पयामि न मर्षयामि यदत्रभवान् वृषलं याजयेत्। यदि याजयेत्। यदा याजयेत्। जातु याजयेत्। अत्र क्रियातिपत्तौ भूते वा लृङ् भविष्यति नित्यम्। नावकल्पयामि (न मर्षयामि) यदत्रभवान् वृषलमयाजयिष्यदित्यादि ॥

यच्चयत्रयोर्गर्हायां च ॥ २०६ ॥

यच्चशब्दे यत्रशब्दे चोपपदे अनवक्लृप्त्यमर्षयोर्गर्हायां च गम्यमानायां सर्वेषु कालेषु धातोर्लिङेव भवति। नावकल्पयामि न मर्षयामि गर्हामहे यच्च (यत्र) तत्रभवान् वृषलं याजयेत्। क्रियातिपत्तौ भूते वा लृङ् भविष्यति (नित्यम्)। नावकल्पयामि न मर्षयामि विगर्हे यच्च (त ? य)त्र तत्रभवान् वृषलं (याजयते। क्रियातिपत्तौ भूते वा लिङ् भविष्यति। नाव-कल्पयामि न मर्षयामि विगर्हे यच्च तत्रभवान् वृषलम् ?) अयाजयिष्यत् ॥

आश्चर्ये च ॥ २०७ ॥

आश्चर्यमद्भुतं, तस्मिन् गम्यमाने यच्चयत्रयोरुपपदयोः सर्वेषु कालेषु लिङ्प्रत्ययो भवति। सर्वलकाराणामपवादः। आश्चर्यमद्भुतं चित्रं

यच्च (यत्र) तत्रभवान् वृषलं याजयेत् । क्रियातिपत्तौ भूते वा लङ् भविष्यति (नित्यम्) । आश्चर्यमद्भुतं चित्रं यच्च तत्रभवान् वृषलमयाजयिष्यत् । यत्र तत्रभवान् वृषलमयाजयिष्यत् ॥

शेषे लृडयदौ ॥ २०८ ॥

यच्चयत्राभ्यामन्यस्मिन् यदिवर्जिते उपपदे चित्रीकरणे गम्यमाने सर्वेषु कालेषु धातो(र्लिङ् ? र्लृट् )प्रत्ययो भवति । सर्वलकाराणामपवादः । आश्चर्यमद्भुतं चित्रम् अन्धो नाम पर्वतमारोक्ष्यति, बधिरो नाम व्याकरणं श्रोष्यति । अयदाविति किम् । आश्चर्यं यदि स भुञ्जीत । अत्र लिङ्निमित्तं नास्तीति क्रियातिपत्तौ लङ् न भवति ॥

उताप्योर्बाढार्थे लिङ् ॥ २०९ ॥

उत, अपि इत्येतयोर्बाढार्थे वर्तमानयोरुपपदयोः सर्वेषु कालेषु धातो लिङ्प्रत्ययो भवति । सर्वलकाराणामपवादः । उत कुर्यात् । (अपि कुर्यात् ) बाढं कुर्यादित्यर्थः । बाढार्थ इति किम् । उत दण्डः पतिष्यति । अपि धास्यति द्वारम् । प्रश्न आवरणं च गम्यते । 'भूते चे'ति निवृत्तम् । इतः प्रभृति भूते भविष्यति च क्रियातिपत्तौ लिङ्निमित्ते नित्यं लङ् भविष्यति । उताकरिष्यत् । अप्यकरिष्यत् ॥

कामप्रवेदनेऽकच्चिति ॥ २१० ॥

स्वाभिप्रायाविष्करणे गम्यमाने सर्वेषु कालेषु धातोर्लिङ्प्रत्ययो भवति न चेत् कच्चिच्छब्दः प्रयुज्यते । कामो मे भुञ्जीत भवान् । अकच्चितीति किम् । कच्चिज्जीवति ते माता ॥

सम्भावनेऽलमर्थे तदर्थाप्रयोगे ॥ २११ ॥

शक्ति(श्र ? श्र)द्धानं सम्भावनं, तस्मिन्नलमर्थे अतिशयवति गम्यमाने तदर्थस्यालमर्थस्य शब्दस्याप्रयोगे धातोः सर्वेषु कालेषु लिङ्प्रत्ययो भवति । अपि गिरिं शिरसा भिन्द्यात् । अपि द्रोणपाकं भुञ्जीत । अलमर्थ इति किम् । विदेशस्थायी देवदत्तः प्रायेण गमिष्यति ग्रामम् । तदर्थाप्रयोग इति किम् । भवति चेदसारेषु भोक्ष्यतेऽलं लवणेन ॥

अय(ति? दि) सम्भावनवचने धातौ वा ॥ २१२ ॥

यच्छब्दवर्जिते सम्भावनवचने धातावुपपदे अलमर्थे सम्भावने गम्यमाने सर्वकालेषु धातोर्लिङ्प्रत्ययो वा भवति । सम्भावयामि श्रद्दधे अवकल्पयामि भुञ्जीत भवान् भोक्ष्यते भवान् (भुक्तवान्?) । अयदीति किम् । सम्भावयामि यत् स भुञ्जीत ॥

हेतुफलयोः ॥ २१३ ॥

हेतुभूते फलभूते चार्थे वर्तमानाद् धातोः सर्वेषु कालेषु लिङ्प्रत्ययो वा भवति । दक्षिणेन चेद् यायात् न शकटं पर्याभवेत् । दक्षिणेन चेद् यास्यति न शकटं पर्याभविष्यति । दक्षिणेन चेद् याति न शकटं पर्याभवति । दक्षिणेन चेदयासीत् न शकटं पर्याभूत् । इह कस्मान्न भवति । हन्तीति पलायते । वर्षतीति धावति । हनिष्यतीति पलायिष्यते । वर्षिष्यतीति धाविष्यति । इति-शब्देनैव हेतुफलभावस्य द्योतितत्वात् । क्रियातिपत्तौ भविष्यति भूते च नित्यं ल(ट्? ङ्) भवति । दक्षिणेन चेदयास्यत् न शकटं पर्याभविष्यत् ॥

इच्छार्थेषु कामप्रवेदने लोट् च ॥ २१४ ॥

इच्छार्थेषु धातुषु कामस्याभिलाषस्य प्रवेदने प्रकाशने सति सर्वेषु कालेषु धातोर्लोट्प्रत्ययो लिङ् च भवति । सर्वलकाराणामपवादः । इच्छामि भुञ्जीत भवान् । इच्छामि भुङ्क्तां भवान् । कामये भुञ्जीत भवान् । कामये भुङ्क्तां भवान् । अत्र सत्यपि लिङ्निमित्ते इच्छार्थेषूपपदेषु कामप्रवेदने क्रियातिपत्तावसामर्थ्येनासम्भवात् लङ् न भवति । कामप्रवेदन इति किम् । इच्छया भुङ्क्ते । 'कामप्रवेदनेऽकच्चिती'ति लिङि सिद्धे लोड्विधानार्थं वचनम् । न चात्र प्रार्थनमस्ति ॥

समानकर्तृकेषु कर्मणो लिङ् ॥ २१५ ॥

समानकर्तृकेषु इच्छार्थेषु धातुषु कर्मभूतार्थाद् धातोर्लिङ्प्रत्ययो भवति । लोटोऽपवादः । समानकर्तृकत्वमुपपदस्य प्रकृत्यपेक्षम् । प्रकृतेश्च कर्मत्व मुपपदापेक्षमिति सन्निधानाद् गम्यते । भुञ्जीयेतीच्छति । भुञ्जीयेति कामयते । समानकर्तृकेष्विति किम् । देवदत्तं भुञ्जानमिच्छति । कर्मण इति

किम् । इच्छन् करोति । अत्र करोतीच्छत्योर्लक्ष्यलक्षणभावो न तु कर्मक्रियाभाव इति शतैव भवति ॥

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु ॥ २१६ ॥

कर्ता भावः कर्मेति लकारार्थः । तेषु विध्यादिविशिष्टेषु धातोः सर्वेषु कालेषु लिङ्प्रत्ययो भवति । विधिः क्रियायां प्रेरणायामेव । यस्यां प्रत्याख्याने प्रत्यवायस्तन्निमन्त्रणम् । इह भवान् भुञ्जीत । यस्यां प्रत्याख्याने कामचारः तदामन्त्रणम् । इह भवाना(स्ताम् ? सीत) । प्रेरणैव सत्कार पूर्विका अधीषणम् । भवान् माणवकमध्यापयेत् । प्रेरणैव न्यक्कारपूर्विका प्रैषः । तत्र लोटं वक्ष्यति । सम्प्रधारणं सम्प्रश्नः । किन्नुखलु भो व्याकरणमधीयीय उत छन्दः । प्रार्थनं याच्ञा । लभेया(भं ? हं) भिक्षाम् ॥

लोट् च ॥ २१७ ॥

विध्याद्युपाधौ कर्त्राद्यर्थे धातोर्लोट्प्रत्ययो भवति । कटं करोतु । इह भवान् भुङ्क्ताम् । इह भवानास्ताम् । इह भवान् माणवकमध्यापयतु । किन्नुखलु भो व्याकरणमध्ययै उत छन्दः । देहि भिक्षाम् ॥

प्रैषानुज्ञाप्राप्तकालेषु ॥ २१८ ॥

प्रैषादिविशिष्टे कर्त्रादौ धातोर्लोट्प्रत्ययो भवति । प्रेषितोऽसि ग्रामं गच्छ । अनुज्ञातोऽसि कटं कुरु । कुरु कटं प्राप्तस्ते कालः कटकरणे ॥

लिङ् चोर्ध्वमौहूर्तिके ॥ २१९ ॥

प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्तिकेऽर्थे वर्तमानाद् धातोर्लिङ्प्रत्ययो लोट् च भवति । ऊर्ध्वं मुहूर्त्तादुपरि मुहूर्त्तस्य भवान् खलु कटं कुर्यात्, कटं करोतु भवान्, प्रेषितः अनुज्ञातः प्राप्तस्ते कालः कटकरणे ॥

स्मे लोट् ॥ २२० ॥

स्म उपपदे प्रैषादिषु गम्यमानेषु ऊर्ध्वमौहूर्त्तिकेऽर्थे वर्तमानाद् धातोर्लोट्प्रत्ययो भवति । लिङोऽपवादः । ऊर्ध्वं मुहूर्त्तादनुज्ञातः कटं करोतु स्म भवान्, प्राप्तस्ते कालः कटकरणे ॥

अधीष्टौ च ॥ २२१ ॥

अध्येषणायां च विषये स्मशब्द उपपदे सर्वेषु कालेषु धातोर्लोट्-प्रत्ययो भवति । लिङोऽपवादः । अङ्ग! स्म विद्वन्! माणवकमध्यापय ॥

कालसमयवेलासु लिङ् यदि ॥ २२२ ॥

कालसमयवेलासूपपदेषु यच्छब्दप्रयोगे धातोः सर्वेषु कालेषु लिङ्-प्रत्ययो भवति । काले यद् भुञ्जीत भवान् । समये यद् भुञ्जीत भवान् । सर्वेषु यद् भुञ्जीत भवान् । बहुलाविकारात् कालो भोजनस्येत्याद्यपि ॥

अर्हशक्तयोः ॥ २२३ ॥

अर्हे शक्ते च कर्त्रादौ धातोर्लिङ्प्रत्ययो भवति । भवानर्हः खलु कन्यां वहेत् । भवाञ्छक्तः खलु शत्रून् हन्यात् ॥

धातुसम्बन्धे प्रत्ययाः ॥ २२४ ॥

धात्वर्थानां सम्बन्धे विशेषणविशेष्यभावे सति अयथाकालमपि प्रत्ययाः साधवो भवन्ति । अग्निष्टोमयाज्यस्य पुत्रो जनिता । कृतः कटः श्वो भ(वति? विता) । भावि कृत्यमासीत् । अग्निष्टोमयाजीति भूतकालः । जनितेति भविष्यत्कालः । तत्र भूतकालो भविष्यत्कालेनापि सम्बध्यमानः साधुर्भवति । एवं(भू? कृ)तः कटः श्वो भवितेति । भावि कृत्यमासीदित्यत्र भावीति भविष्यत्कालः आसीदिति भूतकालेनापि सम्बध्यमानः साधुर्भवति । विशेषणं तु गुणत्वाद् विशेष्यकाल(म्) अनुरुध्यते । तेन विपर्ययो न भवति । प्रत्ययाधिकारे पुनः प्रत्ययग्रहणादधात्वधिकारविहिता अपि प्रत्ययाः साधवो भवन्ति । गोमानासीत् । गोमान् भविता ॥

क्रियासमभिहारे लोट् तस्य हिस्वौ हिस्ववत् ॥ २२५ ॥

पौनःपुन्यं भृशार्थो वा क्रियासमभिहारः । तद्विशिष्टेऽर्थे वर्त्तमानाद् धातोर्धातुसम्बन्धे सर्वेषु कालेषु लोट्प्रत्ययो भवति । सर्वलकाराणामप-वादः । तस्य च लो(ट्? टः) सर्वपुरुषवचनेषु हिस्वावादेशौ हिस्ववत्

भवतः । तेन परस्मैपदिभ्यो हिः, आत्मनेपदिभ्यः स्व इति भेदो व्यव(ति-ष्ठ ? स्थि)तः । तिङ्त्वं च भवति । लुनीहि लुनीहीत्येवायं लुनाति । लुनीहि लुनीहीत्येवेमौ लुनीतः । लुनीहि लुनीहीत्येवेमे लुनन्ति । लुनीहि लुनीहीत्येव त्वं लुनासि । युवां लुनीथः । यूयं लुनीथ । लुनीहि लुनीहीत्येवाहं लुनामि । आवां लुनीवः । वयं लुनीमः । अधीष्वाधीष्वेत्येवायमधीते । इमौ अधीयाते । इमे अधीयते । अधीष्वाधीष्वेत्येव त्वमधीषे । युवामधीयाथे । यूयमधीध्वे । अधीष्वाधीष्वेत्येवाहमधीये । आवामधीवहे । वयमधीमहे । एवं लुनीहि लुनीहीत्येवायमलावीत् । अलुनात् । लुलाव । लविता । लविष्यति । लूयात् । लुनीयात् । लुनातु । अधीष्वाधीष्वेत्येवायमध्यगीष्ट । अध्यैत । अधिजगे । अध्येष्यते । अध्येता । अधीयीत । अध्येषीष्ट । अधीताम् । एवं वचनान्तरपुरुषान्तरेष्वपि लड्वदेव लकारान्तरेष्वपि हिस्वावुदाहरणीयौ । एवं भावकर्मणोरपि । शय्यस्व शय्यस्वेति शय्यते । अशायि । शायिष्यते देवदत्तेन । लूयस्व लूयस्वेति लूयते । अलावि । लविष्यते केदारः ॥

ननु च क्रियासमभिहाराभिव्यक्तौ द्विर्वचनं नापेक्षते । लोट् पुनः कर्तृकर्मभावार्थत्वेनास्वार्थिकत्वादसमर्थ इति तत्र क्रियासमभिहारद्योतनाय द्विर्वचनं भवति ॥

तध्वम्भाविनो वा ॥ २२६ ॥

तस्य हिस्वाविति वर्त्तते । तस्य क्रियासमभिहारे विहितस्य लोटस्तध्वम्भाविनो हिस्ववद्वा हिस्वावादेशौ भवतः । लुनीत लुनीतेत्येव यूयं लुनीथ । लुनीहि लुनीहीत्येव यूयं लुनीथ । अधीध्वमधीध्वमित्येव यूयमधीध्वे । अधीष्वाधीष्वेत्येव यूयमधीध्वे । एवं लुङादिष्वप्युदाहार्यम् ॥

समुच्चये वा ॥ २२७ ॥

अनेकक्रियाध्यावापः समुच्चयः । तस्मिन् सति समुच्चीयमानक्रियावचनाद् धातोर्धातुसम्बन्धे लोट्प्रत्ययो भवति । तस्य च लोटो हिस्वावादेशौ हिस्ववद् भवतः । तध्वंभाविनो वा भवतः । भ्राष्ट्रमट मठमट खदूरमटेत्येवायमटति । भ्राष्ट्रमटति मठमटति खदूरमटतीत्येवायमटति । छन्दोऽधीष्व व्याकरणमधीष्व निरुक्तमधीष्वेत्येवायमधीते । छन्दोऽधीते व्याकरणमधीते

निरुक्तमधीते इत्येवायमधीते। एवं सर्वेषु वचनेषु पुरुषेषु लकारान्तरेषु च यथायथमुदाहरणीयम्। तध्वंभाविना वा। आष्ट्रमटत मठमटत खदूरमटतेत्येव यूयमटथ। आष्ट्रमट मठमट खदूरमटेत्येव यूयमटथ। छन्दोऽधीध्वं निरुक्तमधीध्वमित्येव यूयमधीध्वे। छन्दोऽधीष्व व्याकरणमधीष्व निरुक्तमधीष्वेत्येव यूयमधीध्वे। छन्दोऽधीध्वे व्याकरणमधीध्वे निरुक्तमधीध्वे इत्येव यूयमधीध्वे। एवं लकारान्तरेष्वपि। सेयमेकैव क्रिया कारकभेदाद् भिद्यमाना क्रियासमुच्चयायैव कल्पते। अथ स्वरूपभेदेन। सक्तून् पिब धानाः खाद ओदनं भुङ्क्ष्वेत्येवायमभ्यवहरति। सक्तून् पिबति धानाः खादति ओदनं भुङ्क्ते इत्येवायमभ्यवहरति। एवं वचनान्तरपुरुषान्तरलकारान्तरेष्वपि स्वरूपभिन्नक्रियाणां समुच्चये लोड्विकल्पोऽपि हिस्वविकल्पश्च भवति॥

यथाविध्यनुप्रयोगः पूर्वस्मिन्॥ २२८॥

धातुसम्बन्धे प्रत्ययविधानाल्लोडन्तस्य चानभिव्यक्तपदार्थत्वादनुप्रयोगः सिद्ध एव। स 'क्रियासमभिहारे लोडि'त्यस्मिन् विधाने यथाविधि भवतीति नियम्यते। लुनीहि लुनीहीत्येवायं लुनाति। छिनत्तीति न प्रयुज्यते। अधीष्वाधीष्वेत्येवायमधीते। पठतीति न प्रयुज्यते॥

समुच्चये सामान्यवचनस्य॥ २२९॥

'समुच्चये च'त्यस्मिन् द्वितीये लोड्विधाने सामान्यवचनस्यैवानुप्रयोगो भवति, न विशे(षणात् ? षाणाम्)। सक्तून् पिब धानाः खाद ओदनं भुङ्क्ष्वेत्येवायमभ्यवहरति। पिबति खादति भुङ्क्ते इति न प्रयुज्यते। आष्ट्रमट मठमट खदूरमट इत्येवायमटति। आष्ट्रमटति मठमटति खदूराण्यटतीति न प्रयुज्यते। अत्रापि कारकभेदात् क्रियाभेदे अटनमात्रस्य सामान्यवचनता भवत्येव॥

अलंखल्वोः प्रतिषेधयोर्भावे क्त्वा वा॥ २३०॥

अलं खलु इत्येतयोः प्रतिषेधार्थयोरुपपदयोर्धातोर्भावे क्त्वाप्रत्ययो वा भवति। अलं कृत्वा, खलु कृत्वा तेन। अलंखल्वोरिति किम्। मा कार्षीः। प्रतिषेधयोरिति किम्। अलङ्कारः॥

मेङः ॥ २३१ ॥

मेङो धातोर्धातुसम्बन्धे भावे क्त्वाप्रत्ययो वा भवति। अपूर्वकालार्थ आरम्भः। अपमित्य याचते। अपमातुं याचते। याचित्वा अपमयते॥

पैरावरयोगे च॥ २३२ ॥

परस्यावरेण अवरस्य परेण च योगे गम्यमाने धातोर्भावे क्त्वाप्रत्ययो भवति। अप्राप्य नदीं पर्वतः। अत्र परनदीयोगेन पर्वतो विशेष्यते। अतिक्रम्य पर्वतं नदी। अत्रावरपर्वतयोगेन नदी विशेष्यते॥

अभिन्नकर्तृकयोः पूर्वकालात्॥ २३३ ॥

अभिन्नः कर्ता ययोस्तयोर्यः पूर्वकालस्तद्वचनाद् धातोर्धातुसम्बन्धे भावे क्त्वाप्रत्ययो (वा ?) भवति। भुक्त्वा व्रजति। द्विवचनमतन्त्रम्। तेन बहूनामपि भवति। स्नात्वा भुक्त्वोषित्वा व्रजति। परापेक्षया वा द्वयोर्द्वयोरभिन्नकर्तृकत्वम्। सर्वेषां वा व्रजतिक्रियापेक्षपौर्वकाल्यमभिन्नकर्तृकत्वं च भवति। अभिन्नकर्तृकयोरिति किम्। भुक्तवति ब्राह्मणे देवदत्तो व्रजति। पूर्वकालादिति किम्। व्रजति प्रजल्पति च॥

व्यादाञ्निमील्यादेरपूर्वकालेऽपि॥ २३४ ॥

व्यादाञ्निमील्यादिभ्यो धातुसम्बन्धे भावेऽपूर्वकालेऽप्यभिन्नकर्तृकत्वे क्त्वाप्रत्ययो भवति। मुखं व्यादाय स्वपिति। अक्षिणी निमील्य हसति। पादौ प्रसार्य पतति। दन्तान् प्रकाश्य जल्पति॥

आभीक्ष्ण्ये णमुल् च॥ २३५ ॥

आभीक्ष्ण्यं पौनःपुन्यम्। अभिन्नकर्तृकयोः पूर्वाभीक्ष्ण्यविशिष्टेऽर्थे वर्तमानाद् धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययः क्त्वा च भवति। भोजंभोजं व्रजति। पीत्वा पीत्वा व्रजति। अत्र क्त्वाणमुलोर्लोट इवास्वार्थिकत्वात् प्रकृत्यर्थोपाधिद्योतने सामर्थ्यं नास्तीत्याभीक्ष्ण्याभिव्यक्तये द्विर्वचनं भवति॥

---

१. 'अपारयोगे च' क. पाठ

न यद्यनाकाङ्क्षे ॥ २३६ ॥

यच्छब्द उपपदे धातोः क्त्वाणमुलौ प्रत्ययौ न भवतः । यत्र वाक्ये पूर्वोत्तरे क्रिये प्रयुक्ते तच्चेन्नापरं किञ्चिदाकाङ्क्षति । णमुलनन्तरः क्त्वा च व्यवहितोऽपि प्रतिषिध्यते । यदयं भुङ्क्ते ततो व्रजति । अनाकाङ्क्ष इति किम् । यदयं भोजंभोजं व्रजति अधीत एव ततः परम् । इह णमुल् कस्मान्न भवति । यदयं पुनःपुनर्भुक्त्वा व्रजति अधीत एव ततः परम् । आभीक्ष्ण्यस्य स्वशब्देनोक्तत्वान्न भवति । क्त्वापि तर्हि न प्राप्नोति । माभूदाभीक्ष्ण्ये, पौर्वकाल्ये भविष्यति ॥

वाग्रेप्रथमपूर्वेषु ॥ २३७ ॥

अग्रे प्रथम पूर्व इत्येतेषूपपदेष्वभिन्नकर्तृकयोर्धात्वर्थयोः पूर्वकालाद्धातोर्धातुसम्बन्धे क्त्वाणमुलौ प्रत्ययौ वा भवतः । अग्रे भुक्त्वा व्रजति । अग्रे भोजं व्रजति । प्रथमं भुक्त्वा व्रजति । प्रथमं भोजं व्रजति । पूर्वं भुक्त्वा व्रजति । पूर्वं भोजं व्रजति । अग्रे भुङ्क्ते ततो व्रजति । प्रथमं भुङ्क्ते ततो व्रजति । पूर्वं भुङ्क्ते ततो व्रजति ॥

कर्मण्याक्रोशे कृञः खमुञ् ॥ २३८ ॥

कर्मण्युपपदे करोतेर्धातोरभिन्नकर्तृकेन धात्वर्थेण सम्बन्धे आक्रोशे गम्यमाने भावे खमुञ्प्रत्ययो भवति । चोरङ्कारमाक्रोशति । दस्युङ्कारमाक्रोशति । चोरोऽसि दस्युरसीत्येवमाक्रोशतीत्यर्थः । चोरकरणमिहाक्रोशसम्पादनार्थमेव न त्वसौ चोरः क्रियते । करोतिस्त्वत्रोच्चारणे वर्तते ॥

स्वाद्वर्थेषु चादीर्घेषु ॥ २३९ ॥

स्वादुशब्दसमार्थेषु अदीर्घेषूपपदेषु करोतेर्धातोरभिन्नकर्तृकेण धातुना सम्बन्धे खमुञ्प्रत्ययो भवति । स्वादुङ्कारं भुङ्क्ते । अदीर्घेष्विति किम् । (धातू? स्वादू)कृत्य भुङ्क्ते ॥

अन्यथैवंकथमित्थंसु णमुलप्रयोगार्हात् ॥ २४० ॥

अन्यथादिषूपपदेषु करोतेरप्रयोगार्हादभिन्नकर्तृकेण धातुना सम्बन्धे णमुल्प्रत्ययो भवति । अन्यथाकारं भुङ्क्ते । एवङ्कारं भुङ्क्ते । कथङ्कारं

भुङ्क्ते । इत्थङ्कारं भुङ्क्ते । करोतिरत्र निरर्थकत्वादप्रयोगार्हः । यावदन्यथा भुङ्क्ते तावदेवान्यथाकारं भुङ्क्त इति । अप्रयोगार्हादिति किम् । अन्यथा कृत्वा शिरो भुङ्क्ते ॥

यथातथयोरसूयाप्रतिवचने ॥ २४१ ॥

यथा तथेत्येतयोरुपपदयोः करोतेरप्रयोगार्हाद् अभिन्नकर्तृकेण धातुना सम्बन्धे णमुल्प्रत्ययो भवति । असूयंश्चेत् पृच्छते प्रतिवक्ति । यथाकारमहं भोक्ष्ये तथाकारमहं भोक्ष्ये, किं तवानेन । असूयाप्रतिवचन इति किम् । यथा कृत्वाहं भोक्ष्ये तथा द्रक्ष्यसि । अप्रयोगार्हादिति किम् । यथा कृत्वाहं शिरो भोक्ष्ये तथा भोक्ष्ये, किं तवानेन ॥

कर्मणि दृशिविदिभ्यां साकल्ये ॥ २४२ ॥

साकल्यविशिष्टे कर्मण्युपपदे दृशिविदिभ्यामभिन्नकर्तृकेण धातुना सम्बन्धे भावे णमुल्प्रत्ययो भवति । कन्यादर्शं वरयति । यां यां कन्यां पश्यति तां तां वरयति, न काञ्चित् परित्यजतीत्यर्थः । ब्राह्मणवेदं भोजयति । यं यं ब्राह्मणं जानाति लभते विचारयति तं तं भोजयति, न कञ्चित् परित्यजतीत्यर्थः । साकल्य इति किम् । कन्यां दृष्ट्वा वरयति । ब्राह्मणं विदित्वा भोजयति ॥

यावति विन्दजीविभ्याम् ॥ २४३ ॥

यावच्छब्द उपपदे विन्दजीविभ्यां धातुभ्यां धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । यावद्वेदं भुङ्क्ते । यावल्लभते तावद् भुङ्क्त इत्यर्थः । यावज्जीवमधीते । यावज्जीवति तावदधीत इत्यर्थः ॥

चर्मोदरयोः पूरेः ॥ २४४ ॥

चर्मोदरयोः कर्मणोरुपपदयोः पूरयतेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । चर्मपूरं स्तृणाति । उदरपूरं भुङ्क्ते । चर्म उदरं च यथा पूर्यते तथा स्तृणाति भुङ्क्ते चेत्यर्थः ॥

वर्षप्रमाण ऊलोपश्चास्य वा ॥ २४५ ॥

पूरयतेर्धातोः कर्मण्युपपदे वर्षप्रमाणे गम्यमाने धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । पूरयतेरूकारलोपश्च वा भवति । गोष्पदपूरं वृष्टो देवः । गोष्पदप्रं वृष्टो देवः । यावता गोष्पदं पूर्यते तावद्वृष्टो देव इत्यर्थः । अस्यग्रहणादुपपदस्य न भवति । मूषिकाबिलपूरं वृष्टो देवः ॥

चेलार्थे क्नोपेः ॥ २४६ ॥

चेलार्थे कर्मण्युपपदे क्नोपयतेर्धातोर्धातुसम्बन्धे वर्षप्रमाणे गम्यमाने भावे णमुल्प्रत्ययो भवति । चेलक्नोपं वृष्टो देवः । वस्त्रक्नोपं वृष्टो देवः । वसनक्नोपं वृष्टो देवः ॥

गात्रपुरुषयोः स्नातेः ॥ २४७ ॥

गात्रस्नायं वृष्टो देवः । पुरुषस्नायं वृष्टो देवः । यावता गात्रं पुरुषश्च स्नाप्यते तावद् वृष्ट इत्यर्थः ॥

निमूलसमूलयोः कषः ॥ २४८ ॥

निमूल समूल इत्येतयोः कर्मणोरुपपदयोः कषेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । निमूलकाषं कषति । समूलकाषं कषति । निमूलसमूलयोरित्यत्ययसाकल्ययोरव्ययीभावौ । मूलात्ययेन कषन् समूलेन कषन् कषतीत्यर्थः ॥

शुष्कचूर्णरूक्षेषु पिषः ॥ २४९ ॥

शुष्क चूर्ण रूक्ष इत्येतेषु कर्मसूपपदेषु पिषेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । शुष्कपेषं पिनष्टि । शुष्कपेषविशिष्टं पिनष्टीत्यर्थः । एवं चूर्णपेषम् । रूक्षपेषम् ॥

अकृते कृञः ॥ २५० ॥

अकृते कर्मण्युपपदे करोतेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । अकृतकारं करोति । अकृतं करोतीत्यर्थः ॥

जीवे ग्रहः ॥ २५१ ॥

जीवे कर्मण्युपपदे ग्रहेर्धातोर्धातुसम्बन्धे णमुल्प्रत्ययो भवति । जीवग्राहं गृह्णाति । जीवन्तं गृह्णातीत्यर्थः ॥

समूले हनः ॥ २५२ ॥

समूले कर्मण्युपपदे हन्तेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । समूलघातं हन्ति । समूलं हन्तीत्यर्थः ॥

करणे च ॥ २५३ ॥

करणवाचिनि चोपपदे हन्तेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । पाणिघातं वेदिमाहन्ति । पा(णि ? द)घातं भूमिमाहन्ति । 'हिंसार्थादेककर्मकादि'ति सिद्धे अहिंसार्थं नित्यसमासार्थं यथाविध्यनुप्रयोगार्थं च वचनम् ॥

स्नेहने पिषः ॥ २५४ ॥

स्निह्यत्यनेनेति स्नेहनमुदकादि । तस्मिन् करण उपपदे पिषेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । उदपेषं पिनष्टि । तैलपेषं पिनष्टि । उदकेन तैलेन च पिनष्टीत्यर्थः ॥

हस्तार्थे वर्तिग्रहिभ्याम् ॥ २५५ ॥

हस्तवाचिनि करण उपपदे वर्तिग्रहिभ्यां धातुभ्यां धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । हस्तवर्तं वर्तयति । करवर्तं वर्तयति । हस्तग्राहं गृह्णाति । पाणिग्राहं गृह्णाति ॥

स्वार्थेषु पुषः ॥ २५६ ॥

आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । तदर्थेषु करणेषु पुषेर्धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति। स्वपोषम्, आत्मपोषं, गोपोषं, पितृपोषं, धनपोषं पुष्यति पुष्णाति वा ॥

बन्धेरधिकरणे ॥ २५७ ॥

अधिकरणवाचिन्युपपदे बन्धेर्धातोर्धातुसम्बन्धे णमुल्प्रत्ययो भवति । चक्रबन्धं बध्नाति । चारकबन्धं बध्नाति । चक्रे चारके च बध्नातीत्यर्थः ॥

संज्ञायाम् ॥ २५८ ॥

संज्ञायामुपपदे बन्धेर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । कौञ्च-

बन्धं बद्धः। मयूरिकाबन्धं बद्धः। बन्धविशेषाणां क्रौञ्चादिकाः संज्ञाः। क्रौञ्चाद्याकारबन्धं बद्ध इत्यर्थः॥

कर्त्रोर्जीवपुरुषयोर्नशिवहिभ्याम्॥ २५९॥

कर्तृवाचिनोर्जीवपुरुषयोरुपपदयोर्यथासङ्ख्यं नशिवहिभ्यां धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति। जीवनाशं नश्यति। पुरुषवाहं वहति। जीवो नश्यति। पुरुषो भूत्वा वहतीत्यर्थः। कर्त्रोरिति किम्। जीवेन नश्यति। पुरुषेण वहति॥

ऊर्ध्वे शुषिपूरोः॥ २६०॥

ऊर्ध्वशब्दे कर्तृवाचिन्युपपदे शुषः पूरेश्च धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति। ऊर्ध्वशोषं शुष्यति। ऊर्ध्वः शुष्यतीत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वः पूर्यत इत्यर्थः॥

कर्मणि चोपमाने॥ २६१॥

कर्मणि कर्तरि चोपमानवाचिन्युपपदे धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति। सुवर्णनिधायं निहितः। सुवर्णमिव निहित इत्यर्थः। एवम् ओदनपाकं पक्वः। कर्तरि, चूडकनाशं नष्टः। चूडक इव नष्ट इत्यर्थः॥

कषादिषु यथाविध्यनुप्रयोगः॥ २६२॥

'निमूलसमूलयोः कष' इत्येतदारभ्य यद्विधानं तत्र यथाविध्यनुप्रयोगो भवति। यस्माद्धातोर्णमुल् विहितः स एव धातुरनुप्रयुज्यते। तथा चैवोदाहृतम्॥

उपात् किरो लवने॥ २६३॥

उपपूर्वात् किरतेर्लवने विषये धात्वर्थे धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति। उपस्कारं मद्रका लुनन्ति। विक्षिपन्तो लुनन्तीत्यर्थः॥

दंशेस्तृतीयायाम्॥ २६४॥

उपपूर्वाद् दंशेस्तृतीयान्त उपपदे धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति। मूलकेनोपदंशं भुङ्क्ते। मूलकोपदंशं भुङ्क्ते। आर्द्रकेणोपदंशं भुङ्क्ते।

आर्द्रकोपदंशं भुङ्क्ते । मूलकाद्युपपदमुपदंशे कर्मापि प्रधानस्य भुजेः करणमिति तृतीयैव भवति । यदा त्वयमवयवक्रियापेक्षया पूर्वकालविवक्षायां क्त्वा क्रियते तदा क्रियाभेदात् सम्बन्धभेदे द्वितीया भवति मूलकमुपदश्य भुङ्क्त इति । सर्वस्य चात्र णमुल्प्रकरणे क्रियाभेदे सति पूर्वकालतायां क्त्वापि भवति । उदरं पूरयित्वा भुङ्क्ते । निमूलं कषित्वा कषति ॥

हिंसार्थादेककर्मकात् ॥ २६५ ॥

हिंसा प्राण्युपघातः । तदर्थाद्धातोरनुप्रयोगेण धातुना सहैककर्मकात् तृतीयान्त उपपदे भावे णमुल्प्रत्ययो भवति । दण्डेनोपघातं गाः कालयति । दण्डोपघातं गाः कालयति । यष्टिभिस्ताडं गृष्टीरुत्थापयति । यष्टिताडं गृष्टीरुत्थापयति । एककर्मकादिति किम् । दण्डेनाहत्य चोरं गोपालको गाः (पा ? का)लयति । असिघातं हन्तीत्यत्र 'करणे च' इत्यनेन नित्यसमासो यथाविध्यनुप्रयोगविषयो णमुल् भवति ॥

सप्तम्यां चोपपीडरुधकर्षः ॥ २६६ ॥

पीड इत्यादिभ्य उपपूर्वेभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । पार्श्वयोरुपपीडं शेते । पार्श्वाभ्यामुपपीडं शेते । व्रजे उपरोधं गाः सादयति । व्रजेनोपरोधं गाः सादयति । पाणावुपकर्षं धानाः सङ्गृह्णाति । (पाणिनोपकर्षं धानाः सङ्गृह्णाति ।) कर्ष इति शपा निर्देशात् कृषतेस्तौदादिकान्न भवति । भूमावुपकृष्य तिलान् हलेनोपकृष्य वपति ॥

आसत्तौ ॥ २६७ ॥

आसत्तिः सन्निकर्षः । तस्यां गम्यमानायां सप्तम्यन्ते तृतीयान्ते चोपपदे धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । केशेषु ग्राहं युध्यन्ते । केशैर्ग्राहं युध्यन्ते । केशग्राहं युध्यन्ते । युद्धसंरम्भात् सन्निकृष्यन्त इत्यर्थः ॥

प्रमाणे ॥ २६८ ॥

प्रमाणे दैर्घ्ये गम्यमाने सप्तम्यन्ते तृतीयान्ते चोपपदे धातोर्धातुसम्बन्धे णमुल्प्रत्ययो भवति । द्व्यङ्गुले उत्कर्षं, द्व्यङ्गुलेनोत्कर्षं खण्डिकां छिनत्ति ॥

पञ्चम्यां त्वरायाम् ॥ २६९ ॥

पञ्चम्यन्त उपपदे त्वरायामौत्सुक्ये गम्यमाने धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । शय्योत्थायं व्रजति । शय्याया उत्थायं व्रजति । एवन्नाम त्वरते, यदावश्यकादिकमपि नापेक्षते । रन्ध्रापकर्षं पयः पिबति । रन्ध्रादपकर्षं पयः पिबति । एवन्नाम त्वरते, यत् पात्रादिकमपि न प्रतीक्षते । त्वरायामिति किम् । आसनादुत्थाय व्रजति ॥

द्वितीयायाम् ॥ २७० ॥

द्वितीयान्त उपपदे त्वरायां गम्यमानायां धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । यष्टिग्राहं युध्यन्ते । यष्टिं ग्राहं युध्यन्ते । लोष्टग्राहं युध्यन्ते । लोष्टं ग्राहं युध्यन्ते । एवं योद्धुं त्वरन्ते, यदायुधग्रहमपि नाद्रियन्ते, यत्किञ्चिदासन्नं गृह्णन्ति ॥

अध्रुवे स्वाङ्गे ॥ २७१ ॥

यस्मिन्नङ्गे छिन्ने प्राणी न विपद्यते तदध्रुवं, तथाविधस्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । भ्रूविक्षेपं जल्पति । भ्रुवं विक्षेपम् । अक्षिनिकाणं हसन्ति । अध्रुव इति किम् । शिर उत्क्षिप्य कर्षति ॥

परिक्लिश्यमाने च ॥ २७२ ॥

परिपीड्यमानस्वाङ्गवाचिनि द्वितीयान्त उपपदे धातोर्धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । उरःप्रतिपेषं युध्यन्ते । कृत्स्नमुरः पीडयन्तो युध्यन्त इति ध्रुवार्थोऽयमारम्भः ॥

विशिपतिपदिस्कन्दिभ्यो वीप्साभीक्ष्ण्ययोः ॥ २७३ ॥

विश्यादिभ्यो धातुभ्यो द्वितीयान्त उपपदे वीप्सायामाभीक्ष्ण्ये च गम्यमाने धातुसम्बन्धे णमुल्प्रत्ययो भवति । विश्यादिभिः क्रियाभिरनवयवेनोपपदार्थानां व्याप्तुमिच्छा वीप्सा । पौनःपुन्यमासेवनमाभीक्ष्ण्यम् । यदाह—'सुप्सु वीप्सा तिङ्क्ष्वव्ययकृत्सु चाभीक्ष्ण्यमि'ति । गेहङ्गेहमनुप्रवेशमास्ते । गेहमनुप्रवेशमनुप्रवेशमास्ते । गेहानुप्रवेशमास्ते । गेहङ्गेह-

मनुप्रपातमास्ते । गेहमनुप्रपातमनुप्रपातमास्ते । गेहानुप्रपातमास्ते । गेहङ्गेहमनुप्रपादमास्ते । गेहमनुप्रपादमनुप्रपादमास्ते । गेहानुप्रपादमास्ते । गेहङ्गेहमवस्कन्दमास्ते । गेहमवस्कन्दमवस्कन्दमास्ते । गेहावस्कन्दमास्ते । वीप्सायामाभीक्ष्ण्ये च द्विर्वचनम् । गेहानुप्रवेशमास्त इत्यादौ तु वीप्साभीक्ष्ण्ययोर्वृत्त्यन्तर्गतत्वाद् द्विर्वचनं न भवति । यथा मानो ददाति । द्विपरिकान्ददाति (?) । वीप्साभीक्ष्ण्ययोरिति किम् । गेहमनुप्रविश्यास्ते ॥

## अस्यतितृषिभ्यां क्रियाविच्छेदकाभ्यां कालेषु ॥ २७४ ॥

कालवाचिषु द्वितीयान्तेषूपपदेषु अस्यतितृषिभ्यां क्रियाव्यवधायकार्थवृत्तिभ्यां धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासं गाः पाययति । द्व्यहतर्षं गावः पिबन्ति । द्व्यहं तर्षं गावः पिबन्ति । अत्यसनेन तर्षणेन च गोपानक्रिया व्यवधीयते । आद्यं पाययित्वा पीत्वा च द्व्यहमतिक्रम्य पाययति पिबन्ति चेत्यर्थः । अस्यतितृषिभ्यामिति किम् । द्व्यहमुपोष्य भुङ्क्ते । क्रियाविच्छेदकाभ्यामिति किम् । अहरत्यस्येषून् गतः । न गतिर्व्यवधीयते । कालेष्विति किम् । योजनमत्यस्य गाः पाययति । पञ्च पिण्डानत्यस्य जलं पिबति अध्व(कः ? गः ।) अध्वकर्मकं पिण्डकर्मकं चात्यसनं व्यवधायकं न कालकर्मकम् ॥

## नाम्न्यादिशिग्रहिभ्याम् ॥ २७५ ॥

नाम्नि द्वितीयान्त उपपदे आदिशिग्रहिभ्यां धातुसम्बन्धे भावे णमुल्प्रत्ययो भवति । नामादेशमाचष्टे । नामान्यादेशमाचष्टे । नामग्राहमाचष्टे । नामानि ग्राहमाचष्टे ॥

## अव्ययेऽनभिप्रेताख्याने कृञः क्त्वा च ॥ २७६ ॥

अव्यये उपपदे अनभिप्रेताख्याने गम्यमाने करोतेर्धातोर्धातुसम्बन्धे भावे क्त्वाप्रत्ययो णमुल् च भवति । ब्राह्मण! पुत्रस्ते जातः । किं तर्हि वृषल! नीचैःकृत्य कथयसि । नीचैः कृत्वा । नीचैःकारम् । उच्चैर्नाम प्रियमाख्येयम् । ब्राह्मण! कन्या ते गर्भिणी । किं तर्हि वृषल! उच्चैःकृत्य कथयसि । उच्चैः कृत्वा । उच्चैःकारम् । नीचैर्नामाप्रियमाख्येयम् । क्त्वाग्रहणं किमर्थम् । यावता सर्वस्मिन्नेवात्र प्रकरणे पूर्वकालविवक्षायां क्त्वा भवतीत्युक्तम् । 'तृतीयादीनि क्त्वा च वे'ति समासो यथा स्यात् ॥

तिर्यच्यपवर्गे ॥ २७७ ॥

अपवर्गः क्रियासमाप्तिः, तस्मिन् गम्यमाने तिर्यक्छब्द उपपदे करोतेर्धातोर्धातुसम्बन्धे भावे क्त्वाप्रत्ययो णमुल् च भवति। तिर्यक्कृत्यास्ते। तिर्यक् कृत्वा । तिर्यक्कारम् । समाप्यास्त इत्यर्थः । अपवर्ग इति किम् । तिर्यक् कृत्वा काण्डं गतः ॥

स्वाङ्गतस्त्वाधार्थे भुवश्च ॥ २७८ ॥

स्वाङ्गतस्तस् स्वाङ्गतस् । तस्मिन् नाधार्थे प्रत्ययान्त उपपदे भवतेः कृञश्च क्त्वाप्रत्ययो णमुल् च भवति । मुखतोभूयास्ते । मुखतःकृत्यास्ते । मुखतः कृत्वा । मुखतःकारम् । एवं पार्श्वतः पृष्ठत इत्यादि । नानाभूयास्ते नाना भूत्वा नानाभावम् । नानाकृत्यास्ते नाना कृत्वा नानाकारम् । एवं विनाभूयास्ते इत्यादि । द्विधाभूयास्ते द्विधा भूत्वा द्विधाभावम् । द्विधाकृत्यास्ते द्विधा कृत्वा द्विधाकारम् । द्वैधंभूयास्ते द्वैधं भूत्वा द्वैधंभावम् । द्वैधंकृत्यास्ते द्वैधं कृत्वा द्वैधङ्कारम् । नाधयोः प्रत्ययत्वात् तदर्थोऽपि प्रत्यय एव गृह्यते । तेनेह न भवति । पृथग् भूत्वा । बहुलाधिकाराद्भूततद्भाव एवेष्यते । तेनेह न भवति । नाना कृत्वा भक्ष्याणि भुङ्क्ते ॥

तूष्णीमि च ॥ २७९ ॥

भवतेर्धातोस्तूष्णीमि चोपपदे धातुसम्बन्धे भावे क्त्वाप्रत्ययो णमुल् च भवति । तूष्णीम्भूयास्ते तूष्णीं भूत्वा तूष्णीम्भावम् ॥

अन्वच्यानुलोम्ये ॥ २८० ॥

अन्वक्छब्द उपपदे आनुकूल्ये गम्यमाने भवतेर्धातोर्धातुसम्बन्धे भावे क्त्वाप्रत्ययो णमुल् च भवति । अन्वग्भूयास्ते अन्वग् भूत्वा अन्वग्भावम् । आनुलोम्य इति किम् । अन्वग् भूत्वा तिष्ठति । तिर्यच्यन्वचीति स्वरूपानुकारात् तिरश्च्यनूचीति न भवति ।

शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ २८१ ॥

शकाद्यर्थेषु धातुषूपपदेषु तत्कर्मभूतक्रियावाचिनो धातोर्भावे तुमुन्प्रत्ययो भवति । शक्नोति भोक्तुम् । इच्छति भोक्तुम् । कर्मण इत्यनेन क्रियाकारकत्वेनात्र धातुसम्बन्धो न तादर्थ्येनेति कथयति ॥

ग्लाघटास्त्यर्थसमर्थार्थकालसमयवेलासु च ॥ २८२ ॥

ग्लाघटास्त्यर्थेषु धातुषु समर्थार्थेषु धातुप्रातिपदिकेषु कालसमयवेलासु च प्रातिपदिकेषु धातोर्यथासम्भवं धातुसम्बन्धे भावे तुमुन्प्रत्ययो भवति । अतादर्थ्यार्थोऽक्रियार्थोपपदार्थश्चायमारम्भः । ग्लायति भोक्तुम् । म्लायति भोक्तुम् । घटते भोक्तुम् । युज्यते भोक्तुम् । अस्ति भोक्तुम् । विद्यते भोक्तुम् । प्रभवति भोक्तुम् । ईष्टे भोक्तुम् । अलं भोक्तुम् । समर्थो भोक्तुम् । समर्थत्वप्रतीतावपि भवति । द्रष्टुं चक्षुः । योद्धुं धनुः । कालो भोक्तुम् । समयो भोक्तुम् । वेला भोक्तुम् ॥

लः कर्मणि च ॥ २८३ ॥

ल इत्यनेन लडादयो लकारा वर्तन्ते । लडादयश्चत्वारः, पञ्च टित उत्सृष्टानुबन्धविशेषाः सामान्येन गृह्यन्ते । वर्तमाने लडित्यादयो यथास्वं कर्तरि विहिताः कर्मणि भावे च भवन्ति । क्रियते कटः । क्रियते भवता । करिष्यते कटः । करिष्यते भवता । एवं सर्वत्र । छन्दसि लिङर्थे लेटं वक्ष्यति । तं च त्रिष्वप्यर्थेषु अत्रैवोदाहरिष्यामः ॥

क्तिच् च[1] कृतः संज्ञायाम् ॥ २८४ ॥

संज्ञायां विषये क्तिच् च .................. प्रत्यया भवन्ति । कण्डूतिः व्याघ्रभूतिः । कः .................. पावकः । भर्ता देवः । एवमन्येऽपि ॥

आशिषि च ॥ २८५ ॥

संज्ञायां विषये आशिषि च गम्यमानायां धातोः क्तिच् च .........श्च भवन्ति । पूर्वेणैव सिद्धे विशेषविहिताभ्यां लिङ्लोड्भ्यां बाधो मा भूदिति पुनर्वचनम् । तनुतात् तन्तिः । रमतां रन्तिः । भवोऽस्य भूयात् भवभूतिः । देवा एनं देयासुर्देवदत्तः । एवं लक्ष्मीधरः श्रीनिवासः इति ॥

इति श्रीदण्डनाथनारायणभट्टसमुद्धृतायां सरस्वतीकण्ठाभरणस्य वृत्तौ हृदयहारिण्यां द्वितीयाध्यायस्य चतुर्थः पादः ॥

द्वितीयाध्यायः समाप्तः ।

---

शुभं भूयात् ॥

1. 'च्' ख. पाठः.

# सूत्रानुक्रमणी ।

## LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | Rs. | As. | P. |
|---|---|---|---|
| भक्तिमञ्जरी **Bhaktimanjari** (Stuti) by H. H. Svāti Śrī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः **Syanandurapuravarnana-prabandha** (Kāvya) by H. H. Svāti Śrī Rāma Varma Mahārāja, with the commentary Sundarī of Rājarāja Varma Koil Tampuran. | 2 | 0 | 0 |

---

### Trivandrum Sanskrit Series.

| | Rs. | As. | P. |
|---|---|---|---|
| No. 1—दैवम् **Daiva** (Vyākaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ **Abhinavakaustubhamala and Daksinamurtistava** by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः **Nalabhyudaya** (Kāvya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः **Sivalilarnava** (Kāvya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः **Vyaktiviveka** (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः **Durghatavrtti** (Vyākaraṇa) by Śaraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका **Brahmatattvaprakasika** (Vedānta) by Sadāśivendrasarasvatī (*out of stock*). | 2 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् **Pradyumnabhyudaya** (Nāṭaka) by Ravi Varma Bhūpa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedānta) by Virūpākṣanātha with the commentary of Vidyācakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalakṣaṇa) by Nīlakaṇṭha (*out of stock*). | 0 | 8 | 0 |
| No. 11—तपतीसंवरणम् **Tapatisamvarana** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedānta) by Ādiśeṣa with the commentary of Rāghavānanda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nāṭaka) by Kulaśekhara Varma with the commentary of Śivarāma (*out of stock*). | 2 | 0 | 0 |
| No. 14—नीतिसारः **Nitisara** (Nīti) by Kāmandaka, with the commentary of Śankarārya (*out of stock*). | 3 | 8 | 0 |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nāṭaka) by Bhāsa (*second edition*). | 1 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् **Pratijnayaugandharayana** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancaratra** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Nārāyaṇa Bhaṭṭa with the commentary of Deśamangalavārya (*second edition*). | 4 | 0 | 0 |
| No. 19—मानमेयोदयः **Manameyodaya** (Mīmāmsā) by Nārāyaṇa Bhaṭṭa and Nārāyaṇa Paṇḍita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि **Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga** (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः **Nanarthanavasamksepa** (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः **Janakiparinaya** (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका **Kanadasiddhantacandrika** (Nyāya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् **Abhisekanataka** by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part I, 1st and 2nd Sargas) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः **Vaikhanasadharmaprasna** (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः **Nanarthanavasamksepa** (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या **Vastuvidya** (Śilpa) (*out of stock*) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः **Nanarthanavasamksepa** (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 33—वाररुचसंग्रहः **Vararucasangraha** (Vyākaraṇa) with the commentary Dīpaprabhā of Nārāyaṇa (*out of stock*). | 0 | 8 | 0 |
| No. 34—मणिदर्पणः **Manidarpana** (Nyāya) by Rājacūḍāmaṇimakhin. | 1 | 4 | 0 |
| No. 35—मणिसारः **Manisara** (Nyāya) by Gopīnātha. | 1 | 8 | 0 |
| No. 36—कुमारसम्भवः **Kumarasambhava** (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part III, 6th, 7th and 8th Sargas). | 3 | 0 | 0 |
| No. 37—आशौचाष्टकम् **Asaucastaka** (Smṛti) by Vararuci with commentary. | 0 | 4 | 0 |
| No. 38—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Ṭīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part I, 1st Kāṇḍa). | 2 | 0 | 0 |
| No. 39—चारुदत्तम् **Carudatta** (Nāṭaka) by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 40—अलङ्कारसूत्रम् **Alankarasutra** by Rājānaka Ruyyaka with the Alaṅkārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*). | 2 | 8 | 0 |
| No. 41—अध्यात्मपटलम् **Adhyatmapatala** (Vedānta) by Āpastamba with Vivaraṇa of Śrī Sankara-Bhagavat-Pāda (*out of stock*). | 0 | 4 | 0 |
| No. 42—प्रतिमानाटकम् **Pratimanataka** by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 43—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Ṭīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas). | 2 | 8 | 0 |
| No. 44—तन्त्रशुद्धम् **Tantrasuddha** by Bhaṭṭāraka Vedottama. (*out of stock*). | 0 | 4 | 0 |

| | | RS. | AS. | P. |
|---|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् **Prapancahrdaya.** | | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः **Paribhasavrtti** (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedānta) by Kṛṣṇānanda Sarasvatī | (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् Do. Do. | (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका **Goladipika** (Jyotiṣa) by Parameśvara. | | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः **Rasarnavasudhakara** (Alaṅkâra) by Singa Bhūpāla. | | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Tīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् **Namalinganusasana** (Kośa) by Amarasimha with the commentary Tîkâsarvasva of Vandyaghaṭîya Sarvânanda (Part IV, 3rd Kâṇḍa). | | 1 | 8 | 0 |
| No. 53—शाब्दनिर्णयः **Sabdanirnaya** (Vedânta) by Prakâśâtmayatîndra. | | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः **Sphotasiddhi-nyayavicara** (Vyâkaraṇa). | | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् **Mattavilasaprahasana** (Nâṭaka) by Mahendravikramavarman. (*out of stock*). | | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका **Manusyalayaca-ndrika** (Śilpa) (*out of stock*). | | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् **Raghuviracarita** (Kâvya). | | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatî | (Part III). | 2 | 0 | 0 |

| | RS. | AS | P. |
|---|---|---|---|
| No. 59—नागानन्दम् **Nagananda** (Nâṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarâma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुतिः **Laghustuti** by Laghubhaṭṭâraka with the commentary of Râghavânanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् **Siddhantasiddhanjana** (Vedânta) by Kṛṣṇânanda Sarasvatī (Part IV). | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रहः **Sarvamatasangraha.** (*out of stock*). | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् **Kiratarjuniya** (Kâvya) by Bhâravi with the commentary Sabdârthadīpika of Citrabhânu (1, 2 and 3 Sargas). | 2 | 8 | 0 |
| No. 64—मेघसन्देशः **Meghasandesa** by Kâlidāsa with the commentary Pradīpa of Dakṣiṇâvartanātha. | 0 | 12 | 0 |
| No. 65—मयमतम् **Mayamata** (Śilpa) by Mayamuni (*out of stock*). | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी **Maharthamanjari** (Darśana) with the commentary Parimala of Maheśvarânanda. | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चयः **Tantrasamuccaya** (Tantra) by Nârâyaṇa with the commentary Vimarśinī of Sankara (Part I, 1–6 Paṭalās) (*out of stock*). | 3 | 4 | 0 |
| No. 68—तत्त्वप्रकाशः **Tattvaprakasa** (Āgama) by Śrī Bhojadeva with the commentary Tâtparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśânaśivagurudevamiśra Part I, Sâmānyapâda). | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part I). | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 71—**तन्त्रसमुच्चयः Tantrasamuccaya**(Tantra) by Nârâyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*). | 3 | 8 | 0 |
| No. 72—**ईशानशिवगुरुदेवपद्धतिः Isanasivaguru-devapaddhati** (Tantra) by Īśānaśiva-gurudevamiśra (Part II. Mantrapāda). | 4 | 0 | 0 |
| No. 73—**ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipatti-prakasa** (Vedānta) by Madhusūdana-sarasvatī. | 0 | 4 | 0 |
| No. 74—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrîḍâ of Viśvarûpâcârya (Part I — Âcâra and Vyavahâra Adhyâyās). | 3 | 4 | 0 |
| No. 75—**शिल्परत्नम् Silparatna** (Śilpa) by Śrī-kumâra (Part I). | 2 | 12 | 0 |
| No. 76—**आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimula-kalpa** (Part II). | 3 | 0 | 0 |
| No. 77—**ईशानशिवगुरुदेवपद्धतिः Isanasivaguru-devapaddhati** (Tantra) by Iśānaśiva-gurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalās). | 3 | 0 | 0 |
| No. 78—**आश्वलायनगृह्यसूत्रम् Asvalayanagrhya-sutra** with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇās). | 3 | 12 | 0 |
| No. 80—**अर्थशास्त्रम् Do.** Do. (Part II, 3—7 Adhikaraṇās). | 4 | 0 | 0 |
| No. 81—**याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti** with the commentary Bâlakrīḍa of Viśva-rūpācārya (Part II. Prâyaścit-tâdhyâya). | 2 | 0 | 0 |
| No. 82—**अर्थशास्त्रम् Arthasastra** of Kauṭalya with commentary by Mahāmahopā-dhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇās). | 3 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 83—ईशानशिवगुरुदेवपद्धतिः **Isanasivagurudevapaddhati** (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyāpāda 31–64 Paṭalās and Yogapāda). | 3 | 8 | 0 |
| No. 84—आर्यमञ्जुश्रीमूलकल्पः **Aryamanjusrimulakalpa** (Part III). | 2 | 0 | 0 |
| No 85—विष्णुसंहिता **Visnusamhita** (Tantra). | 2 | 8 | 0 |
| No. 86—भरतचरितम् **Bharatacarita** (Kâvya) by Kṛṣṇakavi. | 1 | 8 | 0 |
| No. 87—सङ्गीतसमयसारः **Sangitasamayasara** (Sangīta) of Sangītâkara Pârśvadeva. | 1 | 2 | 0 |
| No. 88—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkâra) of Mammaṭabhaṭṭa with the two commentaries the Sampradāyaprakāśinī of Śrī Vidyācakravartin and the Sâhityacûdâmaṇi of Bhaṭṭagopâla (Part I, 1–5 Ullâsās). | 3 | 0 | 0 |
| No. 89—स्फोटसिद्धिः **Sphotasiddhi** (Vyākaraṇa) by Bharatamiśra. | 0 | 8 | 0 |
| No. 90—मीमांसाश्लोकवार्त्तिकम् **Mimamsaslokavartika** with the commentary Kāśikā of Sucaritamiśra (Part I). | 2 | 8 | 0 |
| No. 91—होराशास्त्रम् **Horasastra** of Varāhamihirācārya with the Vivaraṇa of Rudra. | 3 | 0 | 0 |
| No. 92—रसोपनिषत् **Rasopanisat.** | 2 | 0 | 0 |
| No. 93—वेदान्तपरिभाषा **Vedantaparibhasa** (Vedānta) of Dharmarājādhvarīndra with the commentary Prakāśika of Peddādīkṣita. | 1 | 8 | 0 |
| No. 94—बृहद्देशी **Brihaddesi** (Sangīta) of Matangamuni. | 1 | 8 | 0 |
| No. 95—रणदीपिका **Ranadipika** (Jyotiṣa) of Kumāragaṇaka. | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 96—ऋक्संहिता **Rksamhita** with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya (Part I, 1st Adhyāya in 1st Aṣṭaka). | 1 | 8 | 0 |
| No. 97—नारदीयमनुसंहिता **Naradiyamanusamhita** (Smṛti) with Bhāṣya of Bhavasvāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् **Silparatna** (Śilpa) by Śrī-kumāra. (Part II.) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् **Mimamsasloka-vartika** (Mīmāmsā) with the commentary Kāśikā of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः **Kavyaprakasa** (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhitya-cūḍāmaṇi of Bhaṭṭagopāla. (Part II, 6–10 Ullāsās). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् **Aryabhatīya** (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् **Dattila** (Saṅgīta) of Dattila-muni. | 0 | 4 | 0 |
| No. 103—हंससन्देशः **Hamsasandesa** (Vedānta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका **Sambapancasika** (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः **Nidhipradipa** of Siddha-śrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् **Prakriyasarvasva** (Vyākaraṇa) of Śrī Nārāyaṇa Bhatta with commentary (Part I.) | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 107—काव्यरत्नम् **Kavyaratna** (Kāvya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—बालमार्ताण्डविजयम् **Balamartanda-vijaya** (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 109—न्यायसारः **Nyayasara** with the commentary of Vāsudevasūri. | 1 | 8 | 0 |
| No. 110—आर्यभटीयम् **Aryabhaṭiya** (Jyotiṣā) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan. (Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No. 111—हृदयप्रियः **Hridayapriya** (Vaidyaka) by Parameśvara. | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च । **Kucelopakhyana and Ajamilo-pakhyana** (Saṅgīta) by H. H. Svāti Śrī Rāma Varma Maharaja. | 0 | 4 | 0 |
| No. 113—सङ्गीतकृतयः **Sangitakrtis** (Gāna) of H. H. Svāti Śrī Rāma Varma Maharaja. | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा **Sahityamimamsa** (Alaṅkāra) | 1 | 0 | 0 |
| No. 115—ऋक्संहिता **Rksamhita** (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya) (Part II 2nd Adhyāya in Ist Aṣṭaka.) | 1 | 8 | 0 |
| No. 116—वाक्यपदीयम् **Vakyapadiya** (Vyākaraṇa) with the commentary Prakīrṇaka-prakāśa by Helaraja son of Bhutiraja. (Part I). | 1 | 8 | 0 |
| No. 117—सरस्वतीकण्ठाभरणम् **Sarasvatikanta-bharana** (Vyākarṇa) by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 118—बालरामभरतम् **Balaramabharata** (Nāṭya) by Bālarāma Varma Vanci Maharaja. | 2 | 8 | 0 |
| No. 119—विवेकमार्तण्डः **Vivekamarthanda** (Vedānta) of Viśvarūpadeva | 0 | 8 | 0 |
| No. 120—शौनकीयम् **Saunakiya.** | 0 | 8 | 0 |
| No. 121—वैखानसागमः **Vaikhanasagama** (Tantra) of Marīci. | 2 | 0 | 0 |
| No. 122—प्रबोधचन्द्रोदयम् **Prabodhacandrodaya** (Nāṭaka) by Kṛṣṇamiśrayati with the commentary Nāṭakābharaṇa of Śrī Govindāmṛtabhagavān. | 2 | 0 | 0 |
| No. 123—सङ्ग्रामविजयोदयः **Sangramavijayodaya**(Jyotiṣa). | 2 | 0 | 0 |
| No. 124—हरमेखला **Haramekhala** of Māhuka with commentary (Part I. chapters 2, 3 & 4) | 1 | 8 | 0 |
| No. 125—कोकसन्देशः **Kokasandesa** (Kāvya) by Viṣṇutrāta. | 0 | 8 | 0 |
| No. 126—करणपद्धतिः **Karanapaddhati** (Jyotiṣa). | 0 | 4 | 0 |
| No. 127—सरस्वतीकण्ठाभरणम् **Sarasvatikantabharana** by Bhojadeva with the commentary of Śrī Nārāyaṇa Daṇḍanātha. | 1 | 8 | 0 |

***Apply to:—***

*The Superintendent,*

*Government Press,*

*Trivandrum.*